**बालान्नवर्ज्यताराः**

ज्येष्ठार्द्रायमकृत्तिकोरगमखापूर्वाविशाखासुरा वर्ज्याः ॥ १/२ ॥

**गण्डान्तम्**

आश्लेषान्तं मखापूर्वं ज्येष्ठान्तं मूलपूर्वकम् ।
रेवत्यन्तमश्विपूर्वं गण्डान्तमिति कथ्यते ॥ १८ ॥

राशितिथितारकाणां गण्डान्तं जलधिविषयनवमान्ते ।
तत्रोभयतो नाड्यः शशिगुणशरसम्मितास्त्याज्याः ॥ १९ ॥

**उष्णशिखा**

अश्व्यां यामो द्वितीयः शरमितघटिका याम्यभेऽन्त्ये नव स्यु-
र्नाड्यो द्वाविंशदाद्याः शिखिनि पवनभान्तं तथा त्रिस्त्रिरेवम् ।
शूर्पस्याद्येऽष्टनाड्यो वसुमितघटिका मैत्रभेऽन्त्ये दश स्यु-
र्नाड्योऽधः शक्रभार्धात्पुनरपि निर्ऋतेस्त्रिस्त्रिरेवं तथोष्णम् ॥ २० ॥

**विषघटिकाः**

अङ्गे नैव वियत् पयो निल नरो रागी नगं नाखुना
दिव्यं राष्ट्र नरो भयाद् विट नटो वाद्यैर्नरो वीरनुत् ।
निष्ठा नित्य नयोदकं तुक विरा निम्बो निशा वक्त्रनुद्
हव्याशादिषु तानतीत्य परतो नाड्यश्चतस्रो विषम् ॥ २१ ॥

| | विषम् | | अमृतम् | | उष्णशिखा | |
|---|---|---|---|---|---|---|
| नक्षत्राणि | आदिः | अन्तः | आदिः | अन्तः | आदिः | अन्तः |
| अश्विनी | 50 | 54 | 42 | 46 | $7^1/_2$ | 15 |
| भरणी | 24 | 28 | 48 | 52 | 55 | 60 |
| कृत्तिका | 30 | 34 | 54 | 58 | 21 | 30 |
| रोहिणी | 40 | 44 | 52 | 56 | $7^1/_2$ | 15 |
| मृगशिरः | 14 | 18 | 38 | 42 | 55 | 60 |
| आर्द्रा | 11 | 15 | 35 | 39 | 21 | 30 |
| पुनर्वसुः | 30 | 34 | 54 | 58 | $7^1/_2$ | 15 |

| | | | | | | |
|---|---|---|---|---|---|---|
| पुष्यः | 20 | 24 | 44 | 48 | 55 | 60 |
| आश्लेषा | 32 | 36 | 56 | 60 | 21 | 30 |
| मखा | 30 | 34 | 54 | 58 | $7^1/2$ | 15 |
| पूर्वफल्गुनी | 20 | 24 | 44 | 48 | 55 | 60 |
| उत्तरफल्गुनी | 18 | 22 | 42 | 46 | 21 | 30 |
| हस्तः | 22 | 26 | 45 | 49 | $7^1/2$ | 15 |
| चित्रा | 20 | 24 | 44 | 48 | 55 | 60 |
| स्वाती | 14 | 18 | 38 | 42 | 21 | 30 |
| विशाखा | 14 | 18 | 38 | 42 | 0 | 8 |
| अनुराधा | 10 | 14 | 34 | 38 | 52 | 60 |
| ज्येष्ठा | 14 | 18 | 38 | 42 | 20 | 30 |
| मूलम् | 20 | 24 | 44 | 48 | 0 | 8 |
| पूर्वाषाढा | 24 | 28 | 48 | 52 | 52 | 60 |
| उत्तराषाढा | 20 | 24 | 44 | 48 | 20 | 30 |
| श्रवणम् | 10 | 14 | 34 | 38 | 0 | 8 |
| धनिष्ठा | 10 | 14 | 34 | 38 | 52 | 60 |
| शततारा | 18 | 22 | 42 | 46 | 20 | 30 |
| पूर्वाभाद्रा | 16 | 20 | 40 | 44 | 0 | 8 |
| उत्तराभाद्रा | 24 | 28 | 48 | 52 | 52 | 60 |
| रेवती | 30 | 34 | 54 | 58 | 20 | 30 |

**अष्टमी**

गण्डान्तोष्णविषं स्थिरं च करणं रिक्ताष्टमी विष्टयो
लाटैकार्गलवैधृताहिशिरसः सर्वत्र वर्ज्या अमी ॥ १/२ ॥

**विष्टिः**

शुक्लेऽष्टमीपञ्चदश्योः पूर्वार्धे विष्टिरुत्तरे ।
एकादशीचतुर्थ्योस्तु कृष्णे तत्प्राक्तिथिष्वपि ॥ २२ ॥

**रिक्ता**

नन्दा भद्रा जया रिक्ता पूर्णेति तिथयः क्रमात् ।
पुनःपुनर्विपश्चिद्भिः कथिताः प्रथमादिकाः ॥ २३ ॥

**स्थिरकरणानि**

स्थिरकरणान्यसितचतुर्दश्यपरार्धादीनि चत्वारि ।
प्राहुः शकुनिचतुष्पाद्द्विरसनकिंस्तुघ्ननामानि ॥ २४ ॥

**तिथिनक्षत्रराश्यंशसन्धयः**

एकैका घटिका वर्ज्या तिथ्यृक्षाद्यवसानके ।
राशौ पञ्चविघट्यः स्युरंशसन्धौ तथैकका ॥ २५ ॥

**गुलिकोदयः**

चन्द्रो रुद्रो जयो विद्या नयस्तेनः खनी रवेः ।
त्रिंशन्नाड्यह्नि गुलिको दिनपञ्चमवन्निशि ॥ २६ ॥

विषोष्णगुलिकैः स्पृष्टा वर्जनीया हि राशयः ।
दोषकाले त्वतीते तद्राशिशेषः शुभो मतः ॥ २७ ॥

**चक्रार्धम्**

लाटवैधृतापरपर्यायो व्यतीपातश्चक्रार्धम् ॥ १/२ ॥

शुक्लार्धे वैधृताख्यश्च गण्डान्ते लाटनामकः ।
प्रायश्चक्रार्धदोषोऽत्र सायनार्केन्दुहीन्नयेत् ॥ २८ ॥

पितृवरुणौ श्रवणगुरू जलगिरिशौ विश्वसृक्सुराधिपती ।
यमपवनावन्त्यरवी मेषतुलादौ व्यतीपातः ॥ २९ ॥

**ग्रहणम्**

सूर्येन्द्वोर्ग्रहणे दृष्टे वर्जयेद्दिवसत्रयम् ॥ १/२ ॥

**सार्पशिराः**

चन्द्रार्कयोगे मैत्रान्त्यदलं स्यात्सार्पमस्तकः ॥ १/२ ॥
(व्यतीपातनामकनित्ययोगस्य उत्तरार्धम्)

विषोष्णविष्टिगण्डान्तलाटैकार्गलवैधृताः ।
गुलिकोऽहिशिराश्चैते नवदोषा बलोत्तराः ॥ ३० ॥

**एकार्गलः**

2 7 10 11 14 16
मण्डलहीनरवेः स्याद्ब्रह्मासननित्यपूज्यभयतुल्ये ।
18 20
दैत्यनरर्क्षे तस्मिन्नादौ नाडीसमैकार्गलो वर्ज्यः ॥ ३१ ॥

**मृत्युयोगः**

त्यज रविरनुराधा उत्तराषाढचन्द्रे मृगशिरगुरुवारे सार्पसंयुक्तशुक्रे ।
क्षितिसुतशततारा इन्दुजे चाश्विनी च रविसुतमितिहस्ते मृत्युयोगान् वदन्ति ॥ ३२ ॥

मृत्युयोगा मखाशूर्परौद्रमूलप्रचेतसः ।
रोहिणी चोत्तराषाढा युक्ता सूर्यादिवासरैः ॥ ३३ ॥

**दग्धयोगः**

बुधद्वितीया कुजपश्चमी च षष्ठी गुरोरष्टमिशुक्रवारे ।
एकादशी सोमशनिर्नवम्यां द्वादश्यथार्केण च दग्धयोगः ॥ ३४ ॥

**पापदृष्टिः उदयश्च**

उल्कोर्वीचलनोपरागगुलिकाः षष्ठाष्टमान्त्येन्द्वसद्
दृष्टारूढविमुक्तराशिसितदृक्सायाह्नसन्ध्यादयः ॥ १/२ ॥

**त्रयोदशीप्रदोषः**

आदित्यास्तमयद्वये यदि भवेत् पार्श्वं न चेत्स्याद्द्वये
तर्ह्याद्यास्तमये प्रदोष इह सन्ध्योपासनं स्यान्मितम् ।
पादोनाब्धिघटीः पुरास्तमनतः प्रारभ्य मौनं चरेद्
ध्यायन्नात्महितं मनूनृणहरानारात्रिमध्यं जपेत् ॥ ३५ ॥

**निशीथः**

निशीथस्तु पुमानर्धरात्रेः स्याद्रात्रिमात्रके ॥ १/२ ॥

**रविदर्शनम्**

*सूर्यस्थितराशेः सप्तमराश्युदयकालो वर्ज्यः ।*

**सङ्क्रान्तिः**

रविसङ्क्रमणात्पूर्वं परतश्चापि षोडश ।
घटिकाश्च विवर्ज्याः स्युः सर्वेषु शुभकर्मसु ॥ ३६ ॥

**प्रष्टुः विपत्प्रत्यरवधताराः**

आद्ये प्रत्यरभे विपद्यपि वधे त्याज्योऽखिलांशोऽसता-
मन्त्येऽन्त्याद्यतृतीयभागमितरत्रर्क्षेश्च लग्नाष्टमम् ॥ १/२ ॥

**दोषाणां दुष्टफलानि**

बालान्नेतरतारकासु च रुजो भुक्त्युद्भवाः पृच्छतां
गण्डान्ते स्वजनापदो ज्वलनभीरुष्णे विषे सर्पभीः ।
अष्टम्यामरिभीश्च विष्टिकरणे धान्यक्षयो दृष्टिरुग्
रिक्तायामरिपीडनं च करणे व्यापत् स्थिराख्ये मृगात् ॥ ३७ ॥

चक्रार्धे पदनाशनार्थविहती तिथ्यादिसन्धौ वृथा-
सङ्ग्रामो गुलिकोदये मृतिभयं चैकार्गले दुर्मृतिः ।
गेहालस्यमथाहिमस्तकगते दैर्घ्यं रुजां पृच्छतः
पापालोकनसंयुतौ तु नितरां नीचाच्च चोराद्भयम् ॥ ३८ ॥

काले स्याद्ग्रहणे तनोस्तु कृशता चार्थक्षयः सङ्क्रमे
पृच्छा चेन्मरणं च गेहदहनं मृत्य्वादियोगेष्वथ ।
भूपार्ती रविदर्शने विपदरातिक्लेशहिंसाः क्रमाद्
गोमासर्क्षगते तु धीचलनमालस्यं निशीथे गिराम् ॥ ३९ ॥

भूतानामपि पीडनं शिवतिथौ नागप्रदोषेऽप्यसौ
लग्नादष्टमगे विधौ स्वजननीरुग्बुद्धिदौष्ट्यादिकम् ।
जन्मेन्दौ सुखहीनता च मरणं जन्माष्टमेन्दावपि
ह्येवं प्रश्नवशाच्छुभाशुभफलं सर्वं बुधैरूह्यताम् ॥ ४० ॥

गण्डान्तोष्णादिसमये प्रश्नः स्यादशुभप्रदः ।
विशेषतोऽग्निपतनं बालस्य गृहनाशनम् ॥ ४१ ॥

इत्यादिदोषरहिते कालेऽमृतघटीषु च ।
शुभानामुदये दृष्टौ मुहूर्तेषु शुभेषु च ॥ ४२ ॥

सिद्धामृतादियोगेषु पृच्छाभीष्टफलप्रदा ॥१/२ ॥

**अमृतघटिकाः**

भीमो राम जलं मृगो विश विभुः क्षीणो वमन् विश्वनुद्
रम्भा शम्भु भवा जलं जलभृगुर्दुर्गे भवं दैवनुत् ।
विद्वान् वेग भग प्रभुर्नव दिवा विष्णुः प्रभा जीवनुद्
हव्याशादिषु तानतीत्य परतो नाड्यश्चतस्रोऽमृतम् ॥ ४३ ॥

**शुभानामुदयो दृष्टिश्च**

प्रकाशकौ द्वौ प्रथमौ ग्रहाणां ताराग्रहाः पञ्च परे ततो द्वौ ।
तमोग्रहौ तेषु शुभाश्च मध्ये त्रयो बलीन्दुश्च परे तु पापाः ॥ ४४ ॥

श्रेष्ठेति सा सप्तमदृष्टिरेव सर्वत्र वाच्या न तथान्यदृष्टिः ॥ १/२ ॥

**मुहूर्ताः**

अह्नः पञ्चदशो भागः मुहूर्तस्तारकाह्वयः ।
दिवा पञ्चदशोक्तास्ते निशायां च तथा स्मृताः ॥ ४५ ॥

आर्द्रोरगमित्रमखावसुजलविश्वाभिजिद्विरिञ्चेन्द्राः ।
ऐन्द्राग्निमूलवरुणार्यमभगतारा दिवा मुहूर्ताः स्युः ॥ ४६ ॥

*आर्द्रा*

शठगर्वितः कृतघ्नो हिंस्रः पापश्च रौद्रर्क्षे ॥ १/२ ॥

*आश्लेषा*

शठसर्वभक्षपापः कृतघ्नो धूर्तश्च भौजङ्गे ॥ १/२ ॥

*अनुराधा*

आढ्यो विदेशवासी क्षुधालुरटनोऽनुराधासु ॥ १/२ ॥

*मखा*

बहुभृत्यधनो भोगी सुरपितृभक्तो महोद्यमः पित्र्ये ॥ १/२ ॥

*धनिष्ठा*

दाता चाढ्यः शूरो गीतप्रियो धनिष्ठासु धनलुब्धः ॥ १/२ ॥

*पूर्वाषाढा*

इष्टानन्दकलत्रो मानी दृढसौहृदश्च जलदैवे ॥ १/२ ॥

*उत्तराषाढा*

वैश्वे विनीतो धार्मिको बहुमित्रः कृतज्ञः सुभगश्च ॥ १/२ ॥

*अभिजित्*

अभिजिन्नाम मध्याह्ने मुहूर्तो वैष्णवः स्मृतः ।
चक्रमादाय भगवान् विष्णुर्दोषान् व्यपोहति ॥ ४७ ॥

*रोहिणी*

रोहिण्यां सत्यशुचिः प्रियंवदः स्थिरमतिः सुरूपश्च ॥ १/२ ॥

*ज्येष्ठा*

ज्येष्ठासु न बहुमित्रः सन्तुष्टो धर्मवित् प्रचुरकोपः ॥ १/२ ॥

*विशाखा*

ईर्ष्युर्लुब्धो द्युतिमान् वचनपटुः कलहकृद्विशाखासु ॥ १/२ ॥

*मूलम्*

मूले मानी धनवान् सुखी हिंस्रः स्थिरो भोगी ॥ १/२ ॥

*शतभिषक्*

स्फुटवाग्व्यसनी रिपुहा साहसिकः शतभिषजि दुर्ग्राह्यः ॥ १/२ ॥

*उत्तरफल्गुनी*

सुभगो विद्याप्तधनो भोगी सुखभाग्द्वितीयफाल्गुन्याम् ॥ १/२ ॥

*पूर्वफल्गुनी*

प्रियवाग्दाता द्युतिमानटनो नृपसेवको भाग्ये ॥ १/२ ॥

**सिद्धयोगः**

उत्तरासलिलपौष्णविष्णवो मातृमारुतवसुप्रचेतसः ।
मित्रदण्डधरपौष्णतारकाः सोमविश्वभगमित्रवेधसः ॥ ४८ ॥

मैत्राश्विनीमारुतमातृतिष्या भगत्रयीनैर्ऋतपौष्णदस्राः ।
धात्रग्निवायुत्रयवारिनाथाः सार्कादिवाराः शुभसिद्धयोगाः ॥ ४९ ॥

अमृतयोगः

सार्कादिवारा गुरुमूलहस्ताश्वित्रादिमार्धश्रवणेन्दुताराः ।
बुध्न्यश्विनीविश्वभगप्रजेशा विश्वाग्निमित्राः शरशैलतिथ्योः ॥ ५० ॥

त्रयोदशीमातृजलान्त्यभानि भगप्रचेतोमरुतः सनन्दाः ।
भद्रासमेता वसुधातृवाताः क्रमेण योगा अमृताभिधानाः ॥ ५१ ॥

| सिद्धयोगः | | अमृतयोगः | |
|---|---|---|---|
| रविवासरः | उत्तरा, पूर्वाषाढा, रेवती, श्रवणम् | रविवासरः | पुष्यः, मूलम्, हस्तः |
| चन्द्रवासरः | पुनर्वसुः, स्वाती, धनिष्ठा, शततारा | चन्द्रवासरः | चित्राद्यर्धम्, श्रवणम्, मृगशिरः |
| कुजवासरः | अनुराधा, भरणी, रेवती | कुजवासरः | उत्तराभाद्रा, अश्विनी, उत्तराषाढा, पूर्वा, रोहिणी |
| बुधवासरः | मृगशिरः, उत्तराषाढा, पूर्वा, अनुराधा, रोहिणी | बुधवासरः | उत्तराषाढा,कृत्तिका, अनुराधा, पञ्चमी, सप्तमी |
| गुरुवासरः | अनुराधा, अश्विनी, स्वाती, पुनर्वसुः, पुष्यः | गुरुवासरः | त्रयोदशी, पुनर्वसुः, पूर्वाषाढा, रेवती |
| शुक्रवासरः | पूर्वा, उत्तरा, हस्तः, मूलम्, रेवती, अश्विनी | शुक्रवासरः | पूर्वा, शततारा, स्वाती, नन्दातिथयः |
| शनिवासरः | रोहिणी,कृत्तिका, स्वाती, विशाखा, अनुराधा, शततारा | शमिवासरः | भद्रातिथयः, धनिष्ठा, रोहिणी, स्वाती |

आदिपदेन वरयोगः

चित्राग्नीश्वरपाशिनो दिनपतेर्वारे सनन्दास्तथा
भौमस्याम्बुभुजङ्गपौष्णमरुतो योगा वराख्याः शुभाः ॥ १/२ ॥

सिद्धियोगः

नन्दा भार्गवभौमतीक्ष्णमहसां भद्रा कवीन्द्वोर्जया
चान्द्रीक्ष्मासुतयोः शनेरपि परा पूर्णा गुरोः सिद्धिदा ॥ १/२ ॥

**अमृतसिद्धियोगः**

आदित्यहस्ते गुरुपुष्ययोगे बुधानुराधा शनिरोहिणी च ।
सोमः श्रवण्यां भृगुरेवती च भौमाश्विनी चामृतसिद्धियोगः ॥ ५२ ॥

**शुभकालस्य शुभफलानि**

योगे सिद्धप्रसिद्धे सुखसुतसुहृदर्थास्तयश्चामृताख्ये
ह्यारोग्यायुः शुभं स्याच्छुभखगयुतिसंवीक्षणेत्रात्मसौख्यम् ।
पुण्योत्पत्तिर्मुहूर्ते सकलशुभयुते स्याच्छुभे चामृतायां
नाड्यामारोग्यसम्पच्छुभमपि नियमात् पृच्छतां प्रश्नकाले ॥ ५३ ॥

**दिनगतनाडिकावशाल्लक्षणानि**

आदित्यादिदिनेष्विनादिफणिपर्यन्ताः क्रमेणोदयं
स्वस्वाद्याः स्वदिनेषु यान्ति दिवसाष्टांशेषु खल्वष्टसु ।
जीवज्ञास्फुजितां क्रिया हि सकलाः सिद्ध्येयुरिन्दोः शनै-
र्नान्येषामुदये वदेदिति सुधीः सञ्चिन्त्य पृच्छाविधौ ॥ ५४ ॥

पश्ने दिनगतविघटीर्विन्यस्य विभज्य शेखरैः शेषात् ।
विज्ञेयो विहगानामुदयो वक्तव्यममुनेदम् ॥ ५५ ॥

गतनाडिकामुदधिसङ्गुणां हरेदवनीधरैस्तु परिशेषितैः क्रमात् ।
मृतिविभ्रमौ कलहसौख्यनिर्गमाः सकलत्रबन्धनमितीरयेद् बुधः ॥ ५६ ॥

तत्कालेष्टघटीर्निहत्य गिरिभिस्त्यक्त्वाष्टभिर्दीनता-
मारोग्यं परिरक्षणीयमरणं सर्वाङ्गसम्पीडनम् ।
निद्रालस्यमतिभ्रमं ज्वररुजं शास्तुः प्रकोपादिकं
दुर्मूर्त्याद्यरिपीडनं च कथयेत् पृच्छाविधाने फलम् ॥ ५७ ॥

**पञ्चभूतोदयः**

यामः स्याद्दिवसाष्टभाग इह तेष्वोजे महीपूर्वको
युग्मे स्याद्गगनादिभिश्च दिवसे रात्रौ च भूतक्रमः ।
भूमेः पादयुता घटी तु पयसो नाड्यङ्घ्रिहीना शुचे
र्नाड्यर्धं पवनस्य खस्य घटिकापादो द्वयोर्यामयोः ॥ ५८ ॥

भूतानामुदयेन च विचिन्तयेत् प्रष्टृकार्यमखिलमपि ।
न मृतिर्न रोगशान्तिर्धरणेरुदये जलोदये तु पुनः ॥ ५९ ॥

ईप्सितमचिरात्सिद्ध्यति वह्नेरुदये मृतिर्विरोधश्च ।
वायोरुदये सर्वं सिद्ध्यति गमनागमादि चलकार्यम् ॥ ६० ॥

व्याध्यारम्भो नाशः स्थिरकार्यं चाहवश्च तथा ।
आकाशोदयकाले सिद्ध्यत्यशुभं विशेषेण ॥ ६१ ॥

दिनद्वादशांशो मतः कालहोरा पतिस्तस्य पूर्वस्य वाराधिनाथः ।
ततः षष्ठषष्ठाः क्रमेणेतरेषां निशायां च वाराधिपात्पञ्चमाद्याः ॥ ६२ ॥

मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः ।
सप्तैते कालहोरेशाः क्रमशः शीघ्रगामिनः ॥ ६३ ॥

कालहोराफलम्

कालहोराफलं वाच्यं प्रष्टुर्विस्मापनं परम् ।
विश्वासार्थं स्वभारत्यास्तदप्यथ विलिख्यते ॥ ६४ ॥

सूर्यस्य कालहोरायां प्रश्नश्चेद्भूमिपागमः ।
नार्यागमः शशाङ्कस्य भूमिपुत्रस्य शस्त्रिणाम् ॥ ६५ ॥

बौध्यां पारशवायानमथवा विद्वदागमः ।
गुरोर्विप्रवरायानं भृगोर्वेश्याङ्गनागमः ॥ ६६ ॥

मन्दस्य वणिगायानं भृत्यबौद्धागमोऽथवा ।
केन्द्रगाश्चेदमी खेटा नियमेन वदेदिदम् ॥ ६७ ॥

## देशः

फलप्रसूनसम्पूर्णमहीरुहसमाकुले ।
स्निग्धभूमितले रत्नकाञ्चनादिसमन्विते ॥ ६८ ॥

पञ्चेन्द्रियमनःप्रीतिकरे गोमयवारिणा ।
तत्क्षणप्रोक्षितक्षोणितले समवसुन्धरे ॥ ६९ ॥

माङ्गल्यकर्मसंयुक्ते मङ्गलस्त्रीसमाकुले ।
मन्दिरे पुत्रभार्यादिहृष्टपुष्टजनाश्रिते ॥ ७० ॥

यः पृच्छतीदृशे देशे साप्नोत्यभिमतं ध्रुवम् ।
महावने श्मशानान्ते निम्नोच्चे शून्यमन्दिरे ।
गृहे चार्तजने प्रेतक्रियाद्यशुभकर्मणि ॥ ७१ ॥

जलाग्निशुष्कवृक्षान्ते तथैवेन्द्रियचेतसाम् ।
अनिष्टदे प्रदेशे च प्रष्टा नाप्नोत्यभीप्सितम् ॥ ७२ ॥

दृङ्मनसोः प्रीतिकरं प्रश्ने भूदर्शनं यदि स्यात् ।
माङ्गल्यद्रव्याणां भवति शुभमित्यादिशेत् तज्ज्ञः ॥ ७३ ॥

## स्ववायुः

कार्यं श्वासपरीक्षणं प्रतिदिनं बुद्ध्वा प्रभातागमे
तस्येडादिगतिर्धराप्रभृतिसञ्चारश्च विज्ञायताम् ।
तेनात्मीयशुभाशुभं हि सकलं ज्ञेयं पुनः पृच्छतां
तत्कालात्मसमीरणेन च तथा नष्टादिकं चोच्यताम् ॥ ७४ ॥

वारेष्विन्दुबुधाङ्गिरोभृगुभुवां वामे चरन् मारुतो
भौमार्कार्किदिनेषु दक्षिणगतो नृणामभीष्टः स्मृतः ।
सौम्यानां दिवसेषु दक्षिणगतोऽनिष्टो सतां वामगो
वक्ष्यन्ते मरुतोः शुभाशुभदयोर्भेदाः फलानामथ ॥ ७५ ॥

सर्वेषामपि वासरेषु पवनेऽभीष्टे वपुःस्वस्थता
लाभोऽर्थस्य च मृष्टभोजनमितीष्टानां भवोऽथान्यथा ।
श्वासश्चेदहितो न मृष्टमशनं नार्थागमो विग्रहः
सर्वैर्नो शयनं सुखेन च सुखं विण्मोक्षणादिष्वपि ॥ ७६ ॥

श्वासस्य प्रतिकूलता यदि दिने भानोर्वपुर्वेदना
शीतांशोः कलहः कुजस्य मरणं दूरप्रयाणं विदः ।
राज्यापद्धिषणस्य शुक्रदिवसे कार्यस्य कस्यापि नो ।
सिद्धिर्मन्ददिने स्ववीर्यकृषिनाशेलाविवादादयः ॥ ७७ ॥

वायुर्भानुदिनाष्टके यदि चरेद्वामे गुरोः पञ्चता
व्याधिर्वा सुमहांस्तथैव हिमगोर्वाराष्टके दक्षिणे ।
पुत्रापत्क्षितिजस्य बन्धनमरेर्वामे विदो दक्षिणे
मृत्युः स्वस्य निरन्तरं सुरगुरोर्मृत्युर्गुरोः सम्भवेत् ॥ ७८ ॥

शुक्रस्यावनिहेतुर्धनक्षयो दक्षिणे शनेर्वामे ।
यदि चरति मातरिश्वा भार्यानाशो निवासनाशो वा ॥ ७९ ॥

इडा वामा भवेन्नाडी सोमस्यार्कस्य दक्षिणा ।
पिङ्गलाख्या सुषुम्नाख्या मध्यमाग्नेरुदीरिता ॥ ८० ॥

निर्गमे तु शुभदा भवेदिडा पिङ्गला तु शुभदा प्रवेशने ।
योगसाधनविधौ तु मध्यमा शस्यते न तु परेषु कर्मसु ॥ ८१ ॥

देवे दक्षिणभागगेऽथ पुरुषो रोगातुरो दक्षिणे
स्थित्वा पृच्छति पृच्छकेऽथ पुरुषो जीवत्यरोगश्चिरम् ।
वामायां तु रुजाकुलीकृततनौ वामाश्रिते चेश्वरे
वामे पृच्छति चेद्दृढं गतगदा वामा चिरं जीवति ॥ ८२ ॥

देवे गते पृच्छति वामभागे स्थितो नरो दक्षिणतो यदि स्यात् ।
व्यत्यासतोऽस्मादपि कृच्छ्रसाध्यं वदन्ति सन्तः खलु रोगजातम् ॥ ८३ ॥

अन्तर्गते पृच्छति पृच्छकश्चेद्देवे नरो जीवति वीतरोगः ।
तेनैव मार्गेण बहिर्गतश्चेत् परेतराजस्य पुरीं प्रयाति ॥ ८४ ॥

वामे वा दक्षिणे भागे प्रश्नश्चेद्वायुसंयुते ।
जीवेन्नरश्च नारी च तथाऽनुष्ठानपद्धतिः ॥ ८५ ॥

लयलिङ्गश्रवणेक्षास्मरणाभावे तु दूतमारुतयोः ।
एकदिशावस्थाने जीवति रोगी विपर्यये म्रियते ॥ ८६ ॥

**श्वासस्य प्रमाणेन पृथिव्यादिसञ्चारस्तत्फलं च**

मेदिन्याः खलु षोडशाङ्गुलमपां दैर्घ्यं दिनेशाङ्गुलं
वह्नेर्दन्तिमिताङ्गुलं मरुत एतद्द्व्यूनमग्न्यङ्गुलम् ।
आकाशस्य च वेद्यमेतदुदितं भूम्यादिभूतात्मक-
स्वीयश्वासगतिप्रमाणमुभयोरेतत्समं घ्राणयोः ॥ ८७ ॥

पक्षेऽच्छे खलु पक्षतौ क्षितिरिडायातोन्नमन्मन्दिर-
प्राकारादिगृहप्रवेशनकरी पट्टाभिषेकप्रदा ।
कुर्यादन्यदपीष्टकर्म सलिलं वामस्थमेवं शुभं
कूपादे रचनं करग्रहणमम्बूत्थं च कुर्याद्भयम् ॥ ८८ ॥

वह्निर्वारिभयायुधक्षतिशरीरारुर्गृहप्लोषणं
पातं वा शिशुकादिकस्य दहने कुर्याद्व्रजेतेश्वरम् ।
वायुश्चोरभयं पलायनमपि स्थानं विसृज्यात्मनो
दन्त्यश्वाद्यधिरोहणं च वितरेद्व्योमोदयश्चेत्पुनः ॥ ८९ ॥

मन्त्रादेरुपदेशलब्धिरसकृद्देवप्रतिष्ठापनं
दीक्षाव्याधिसमुद्भवश्च नितरां पीडा तनोः सन्ततम् ।
विज्ञेयं खलु भूतपञ्चकफलं नाड्योः समं चोभयोः
श्वासः संहतदीर्घ इष्ट उदितः शीर्यच्छिखो नेष्टदः ॥ ९० ॥

## दशा

आत्मावस्थासदृशमखिलं पृच्छकस्यापि वाच्यम् ॥ १/२ ॥

स्नानभोजननिद्रादिनिजकर्मसु यादृशः ।
आत्मनोऽनुभवस्तेषु तादृशः प्रष्टुरुच्यताम् ॥ ९१ ॥

शास्त्रान्तरमपीहास्ति दूतदैवविदोर्दशा ।
यादृशी तादृशी वाच्या दशा व्याधिमतामपि ॥ ९२ ॥

## प्रष्टुः स्पर्शनम्

प्रष्टा वक्षोदेशे स्पृशेद्यदि क्षिप्रमीप्सितं लभते ।
मङ्गलवस्तुनि च तथा विपरीतं फलममङ्गलस्पर्शे ॥ ९३ ॥

संस्पृशन्नाभिनासास्यकेशरोमनखद्विजान् ।
गुह्यपृष्ठस्तनग्रीवाजठरानामिकाङ्गुलीः ॥ ९४ ॥

रन्ध्राणामपि नवकं करपदयोस्तलं च सर्वपर्वाणि ।
प्रष्टा लभतेऽनिष्टं निम्नस्पर्शे तथैव विज्ञेयम् ॥ ९५ ॥

वक्षोललाटतलगुह्यतलानि नाभिं प्रष्टा स्पृशेद्यदि वदन्ति हि देवतार्तिम् ।
पार्श्वे कराङ्गुलिगले च भुजङ्गपीडां भ्रूकर्णकक्षयुगलेषु पिशाचपीडाम् ॥ ९६ ॥

स्पर्शो दक्षिणबाहुवक्षशिरसां पाणिग्रहे सिद्धिकृ-
ज्ञान्वङ्घ्र्योस्तु विलम्बकृत्परकरे पृष्ठे कटौ विघ्नकृत् ॥ १/२ ॥

केशनखद्विजकुक्षिस्तनभुजनाभ्यूरुमूर्धभगचरणाः ।
ज्ञेयाः पुँल्लिङ्गाख्याः क्षिप्रं पुत्रार्थलाभकराः ॥ ९७ ॥

ग्रीवाभ्रूनासाङ्गुलीजङ्घाहनुनाभिकर्णपाल्यश्च ।
पार्ष्णी कट्यौ नार्योऽर्थदुहितृकृद्दीर्घकालेन ॥ ९८ ॥

मुखपक्ष्ममेढ्रजानूदरपार्श्वशिरोललाटदेशास्तु ।
एते नपुंसकाख्याश्चामर्शे निष्फलाः प्रोक्ताः ॥ ९९ ॥

यद्युद्धरेत्स्वाभिमुखं प्रसार्य हस्तं नगाः स्युर्यदि साङ्गुलीयः ॥ १/२ ॥

करः स वल्लीपरिवेष्टिताङ्गा ग्रीवा विभूषालभनेऽपि तद्वत् ।
शाखाविहीनास्तरवोऽङ्गुलीनामाकुञ्चने स्थाणव एव मुष्टौ ॥ १०० ॥

मुखरोमार्धच्छिन्नं स्पृशेद्यदि वदेत्सकण्टकान् वृक्षान् ।
नासाश्रवसो रन्ध्रस्पर्शे तु बिलं भुजङ्गमाखूनाम् ॥ १०१ ॥

केशान् विश्लथितांश्च रोम मुखजं यद्वा स्पृशेन्निर्दिशे-
न्मुञ्जोशीरकुशादिकानपि नसो वल्मीकमामर्शने ।
मेढ्रक्रोडदृशां कुचास्यविलयोश्चामर्शनेऽन्तर्जलं
प्रष्टुर्वास्त्वनिशोद्यदम्बु कथयेत्स्विन्नाङ्गसंस्पर्शने ॥ १०२ ॥

कक्षापानस्पर्शने वारि दुष्टं बाहून्नत्यां भूरुहोऽतीव दीर्घाः ।
हस्तानत्यां तत्र वृक्षोऽतिखर्वो लोहानि स्युः स्पर्शने दन्नखानाम् ॥ १०३ ॥

जान्वादिकेऽङ्गेऽस्थियुते स्पृशेच्चेत् पाषाणजालैर्निचितास्थिभिश्च ।
नाभ्यादिनिम्नावयवाभिमर्शे श्वभ्रान्विता पृच्छकभूः सकुल्या ॥ १०४ ॥

स्वपृष्ठभागस्थनतप्रदेशस्पर्शेन कुल्यां प्रवदेन्नदीं वा ॥ १/२ ॥

## आश्रितर्क्षम्

पृच्छकाधिष्ठितं राशिं विज्ञायानेन पृच्छताम् ।
अनुभूतं हि वक्तव्यं किमपि प्रत्ययाप्तये ॥ १०५ ॥

राहुर्वार्किः पृच्छकाधिष्ठितर्क्षे यद्वा तस्मात् पञ्चमे वाष्टमे वा ।
चण्डालानां पङ्क्तिरग्रे प्रदृष्टा शूद्रा दृष्टास्तत्र चेद्भूमिजज्ञौ ॥ १०६ ॥

लग्नसुताष्टमसंस्थौ गुरुशुक्रौ चेद्द्विजातिभिर्योगः ।
पापयुतौ दृष्टौ चेद्दुर्ब्राह्मणतन्तुधारिभिर्योगः ॥ १०७ ॥

अर्को यद्येषु नृपैश्चन्द्रसितौ चेत्त्रिया योगः ।
चन्द्रार्कजौ स्थितौ चेद्दुष्टस्त्रीभिः सितः कुलस्त्रीभिः ॥ १०८ ॥

अशुभशुभदृष्टियोगात्तज्जातीयैश्च योगमपि विद्यात् ।
दूतस्य चेष्टयातः परं वदेल्लक्षणं दिशागतया ॥ १०९ ॥

मृत्युस्थेषु दिवाकरादिषु गते तत्तद्दिनेऽभूत्क्रमात्
सङ्घोपद्रवभुक्त्यभावपदविभ्रंशः स्वकर्मक्षतिः ।
नित्यं कर्म विलम्बितं विरहिता योषित् प्रिया चापदः
पापश्चेत्तु तृतीयगः खलु वदेद्भुक्तेरभावं पुनः ॥ ११० ॥

रन्ध्रगे सिंहिकासूनौ वाच्या पादव्यथा पथि ।
मूलांशे कण्टकेनैषा धात्वंशेऽश्माभिघाततः ॥ १११ ॥

जीवांशे साध्वसं सर्पाद्गते मन्दस्य वासरे ।
केतौ रन्ध्रस्थिते वाच्यं पादे पाषाणघट्टनम् ॥ ११२ ॥

मान्दियुक्तोऽत्र केतुश्चेत्पादो नूनमभिद्यत ।
भौमसाम्यात् फले केतोर्गते भौमस्य वासरे ॥ ११३ ॥

पापस्तृतीयसंस्थश्चेद्वक्तव्यं स्यादुपोषणम् ।
गते तु तत्तद्दिवसे सुविचार्यैवमादिशेत् ॥ ११४ ॥

व्ययः षष्ठस्तृतीयश्च भावा नेष्टा यथाष्टमः ।
दिनेष्वनिष्टसंस्थानां यातेष्वशुभदं वदेत् ॥ ११५ ॥

इष्टस्थितानां वारेषु शुभप्राप्तिं विनिर्दिशेत् ।
उदयेनैष्यवारेषु फलमप्येवमादिशेत् ॥ ११६ ॥

द्यूनस्थेष्वशुभेषु दुष्टशकुनं सौम्येषु तच्छोभनं
दूतारूढवशादमुष्य कथयेत् प्रश्नाधिरूढेन वा ।
कर्मारूढसुखस्थितैर्बलयुतैरप्येवमादिश्यतां
यातुर्वा शकुनं शुभाशुभमिति प्रस्थानलग्नाद्वदेत् ॥ ११७ ॥

तत्रस्थे चतुरङ्घ्रिसंज्ञविहगे मातङ्गपश्वादयो-
ऽभ्यायाताः पथि पक्षिसंज्ञखचरे दृष्टाश्चकोरादयः ।
सूर्यारौ तु चतुष्पदौ निगदितौ मन्देन्दुजौ पक्षिणौ
शीतांशुस्तु सरीसृपोऽष्टचरणः शास्त्रे प्रदिष्टः फणी ॥ ११८ ॥

चण्डालाभ्यागमो यद्यहिशिखिगुळिकब्रध्नजास्तत्र संस्थाः
शुक्रेन्दू चेद्वधूनां यदि शशितनयस्तत्र विद्वज्जनानाम् ।
विप्राणां वाक्पतिश्चेद्यदि धरणिसुतः शस्त्रिणां कीर्तनीयो
वर्त्मन्यभ्यागमः प्राग्यदि पुनररुणः श्रैष्ठ्यभाजां जनानाम् ॥ ११९ ॥

## हरित्

पृच्छकस्य दिशि स्थानं विशेषाच्छुभदं नृणाम् ।
पृच्छकस्य स्थितिः कोणे प्रश्ने स्त्रीविषये शुभा ॥ १२० ॥

दक्षिणाशाभिमुख्यं च प्रष्टुर्यमदिशि स्थितिः ।
अशुभाय भवेन्नूनमायुः प्रश्ने विशेषतः ॥ १२१ ॥

## प्रश्नाक्षराणि

आदिमध्यावसानेषु यरता यान्ति लाघवम् ।
भजसा गौरवं यान्ति मनौ तु गुरुलाघवम् ॥ १२२ ॥

सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ।
वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको ल्जुः ॥ १२३ ॥

आद्यैः स्वरैस्तु काद्यैश्च वर्गैर्भिन्ना लिपिर्द्विधा ।
स्वरा जीवस्तनुर्वर्गा इति ज्ञेया च मातृका ॥ १२४ ॥

प्रश्नवाक्यं स्वराद्यं चेज्ज्ञेयं जीवगतं शुभम् ।
दोषश्च देहविषयो हलाद्यं चेदतोऽन्यथा ॥ १२५ ॥

वर्गेष्वक्षरपञ्चकं पवनवह्नीन्द्राम्बुनापुंसकं
वाक्यादौ तु नपुंसकाक्षरमतीवानिष्टदं पृच्छताम् ।
दुष्टौ मारुतपावकौ बलरिपुर्मध्यः प्रशस्तं जलं
दीर्घह्रस्वविभागतः स्वरगणाश्चाम्भोमहेन्द्रात्मकाः ॥ १२६ ॥

भूमेरकारं पयसस्त्विकारं वह्नेरुकारं मुनयो वदन्ति ।
एकारमोकारमपि क्रमेण वायोश्च वर्णं नभसश्च वर्णम् ॥ १२७ ॥

मध्यान्त्याद्यखिलेषु गाजसभमा सूर्यानिलेन्दुक्षमा-
देवाः स्फीतरुगन्यदेशगमनप्रख्यातकीर्तिश्रियः ।
तद्वत्स्युर्लघवो गणा रतयना वह्न्यम्बराम्भोदिवो-
मर्त्याः स्युर्मृतिशून्यतोत्तमसमृद्ध्यायूंषि ते तन्वते ॥ १२८ ॥

आकाशवायुवह्न्यर्णपूर्वं तद्वर्णपूर्वकम् ।
भूतार्थवाचकं चापि वचनं न शुभप्रदम् ॥ १२९ ॥

श्रोत्रप्रियं वदति वा वचनं प्रियं वा यद्वार्थपुष्टगिरमस्खलितां तदानीम् ।
प्रष्टाऽभियात्यभिमतं त्वितरोऽनभीष्टमन्ते विसर्गसहितं वचनं च वक्ता ॥ १३० ॥

अकचटतपयवर्गा रविकुजसितसौम्यजीवसौराणाम् ।
चन्द्रस्य च निर्दिष्टं प्रश्ने प्रथमोद्भवं वर्णम् ॥ २३१ ॥

ज्ञात्वा तस्माल्लग्नं सङ्गृह्य शुभाशुभं वदेत् प्रष्टुः ।
वर्गादिमध्यचरमैर्वर्णैः प्रथमोद्भवैर्विषमम् ॥ १३२ ॥

राशिं लग्नं प्रवदेच्छिष्टैर्युग्मं कुजज्ञजीवानाम् ।
सितरविजयोश्च नैवं रविशशिनोरेकराशित्वात् ॥ १३३ ॥

तस्माल्लग्नात्प्रवदेत् पृच्छासमये शुभाशुभं सर्वम् ।
कालस्याविज्ञानादेतच्चिन्त्यं बहुप्रश्ने ॥ १३४ ॥

**प्रश्नाक्षरगणितम्**

पञ्चघ्नेष्टविभाजितेऽक्षरगणे दूतोदिते शिष्यते
तत्रैकं यदि देवराट्शिखिमुखा दिक्पा यदि द्व्यादिकम् ।
दूतोक्तार्णगणे त्रिभिः खलु हृते शिष्टैकता चेद्गदः
साध्यो नूनमसाध्य एव युगले शिष्टे त्रिके दुश्शमः ॥ १३५ ॥

व्याधीनां शमनं करोति बलभिद्देवस्य पूजादिकै-
रग्निर्होमविधानतोऽथ पितृपूजाभिः पितॄणां पतिः ।
रक्षः सूचयति व्यथार्दितनृणां रुग्ब्रह्मरक्षोमुखा-
वेशेनेति विधानमस्य शमनायाधीयतां धीमता ॥ १३६ ॥

तैलाभिषेकाच्च घृताभिषेकाद्देवे सधारादपि तर्पणाद्वा ।
पाशी विधत्ते गदशान्तिमेषां वक्त्यप्यभावादिकमार्तिहेतुम् ॥ १३७ ॥

मालापटीरागरुगुग्गुलूत्थधूपप्रदानाभरणार्पणाद्यैः ।
देवप्रसादेन गदोपशान्तिं करोति नृणां खलु मातरिश्वा ॥ १३८ ॥

देवद्विजार्चनविधिं जनिभे जनानां रुक्शान्तये विहितवानलकाधिनाथः ।
गीतेन नृत्तकरणेन च भारतेन त्रय्या च देवपरितोषणमप्युमेशः ॥ १३९ ॥

दूतोक्ताद्यक्षरे दीर्घे रोगशान्तिस्तु गानतः ।
ह्रस्वे भोजनपूजाद्यैः संयुक्ते नृत्तकर्मणा ॥ १४० ॥

**मेषादिराशिषु अक्षरविभागः**

आद् वेदरामाग्नियुगाश्विकर्णौ कात् पञ्चवर्गा यचतुष्टयं च ।
क्रमेण मेषादिषु योजनीयाः शेषास्तु षष्ठे भगणागमज्ञैः ॥ १४१ ॥

| | | | |
|---|---|---|---|
| य र ल व | अ आ इ ई<br>श | उ ऊ ऋ<br>ष | ॠ ऌ ॡ<br>स |
| पवर्गः | | | ए ऐ<br>ह |
| तवर्गः | | | ओ औ<br>ळ |
| टवर्गः | चवर्गः | कवर्गः | अं अः<br>क्ष |

द्व्यक्षरं तु चरे राशौ स्थिरे तु चतुरक्षरम् ।
उभयेऽर्णत्रयं विद्यान्नामभेदसमन्वितम् ॥ १४२ ॥

## स्थितिः

वामाङ्घ्रिरग्रे निहितः शुभः स्याद्दूतस्य दोषाय च दक्षिणाङ्घ्रिः ।
दोषाय चाङ्घ्रेश्चलनं हि तस्य स्थितिः स्थिरा तस्य शुभप्रदा स्यात् ॥ १४३ ॥

सुखोपविष्ट ऋज्वङ्गस्तुङ्गदेशे शुभासने ।
दैवज्ञाभिमुखश्चैव शुभं यात्यन्यथाऽशुभम् ॥ १४४ ॥

उत्तिष्ठति यदि प्रश्नं कुर्वन्नासीत आसनात् ।
स्थितश्चोपविशेत् कुर्वन् भद्रमेवोभयं मतम् ॥ १४५ ॥

प्रष्टा दृष्टिपथं प्राप्य स्थित्वा स्थित्वागमद्यदि ।
अतीत्य स्थितिसंख्याहान्यस्य कार्यस्य साधनम् ॥ १४६ ॥

अन्तरा दूतमात्मानं यदि कश्चन गच्छति ।
अनागमं सहायस्य कल्पितस्यास्य निर्दिशेत् ॥ १४७ ॥

## चेष्टा

हस्तौ धुन्वन् विमृद्नंश्च तिरश्चीनमुखः स्थितः ।
विस्मृतस्वार्थ इत्येतैर्यत्पृष्टं तद्विनश्यति ॥ १४८ ॥

स्वाङ्गेष्वन्यत्र वा द्रव्ये गाढसन्ताडनं क्षणात् ।
मृत्युदं लयलिङ्गानां चिन्तेक्षाश्रवणादिकम् ॥ १४९ ॥

सुप्ते मुक्तकचेऽशुचौ रुदति वा भग्नागमे मुण्डिते
नग्ने छिन्दति भिन्दति द्रवति वा वह्नौ हविर्जुह्वति ।
दूते हस्तपदां च बन्धनपरे दोक्ष्णाक्षिसम्मर्दने
दीने काष्ठतृणादिमर्दनपरे न स्याद्विचारः शुभः ॥ १५० ॥

पाशोद्वर्तनके नखैर्लिखति वाप्युत्सारिते वारिते
साभ्यङ्गे भसितास्थिसीसशकृतां भर्तर्यपि व्याधिते ।

वस्त्रप्रावृतकन्धरे च मलिने रूक्षाऽशुभालापिनि
प्रश्नो नैव शुभाय निर्वपति वा पिण्डान् परेतान् प्रति ॥ १५१ ॥

वासीखड्गपलालजालकतुषापादत्रपिञ्छत्वचां
शृङ्गस्यापि च वाहके च विकले सम्मार्जनीधारिणि ।
प्रेतालंकृतिशूर्पपाशमुसलान् भर्तर्युपेते क्षुधा
दैवज्ञेऽपि च पृच्छके न च शुभो ज्ञेयो विचारः क्वचित् ॥ १५२ ॥

## भावः

दौर्मुख्यं वदनारूढशोककोपश्रमादिभिः ।
वैमनस्यं च दूतस्य येन केनापि दोषकृत् ॥ १५३ ॥

सुन्दरश्च कुलीनश्च विनयी च निरामयः ।
सुप्रसन्नश्च दूतश्चेत्प्रष्टा सुखमवाप्नुयात् ॥ १५४ ॥

## विलोकनम्

उन्मिषदम्बकयुगलो मङ्गलपदार्थदृढतरनिहितेक्षः ।
अध ऊर्ध्वेक्षणरहितो लभतेऽभीष्टं प्रतीपदृग्दुःखम् ॥ १५५ ॥

व्याधेः शान्तिर्भवति मुखजैर्दक्षिणोर्ध्वावलोके
प्रष्टुर्दृष्टावथ पुनरधो देवतागायकैश्च ।
वामोर्ध्वाधः सुदृढनिहितप्रेक्षणे तु प्रशस्तै-
श्चण्डालानामपि तदधमैः सा निरुक्ता क्रमेण ॥ १५६ ॥

## वसनादि

तोयार्द्रभिन्नमलिनारुणनीलवासा रक्तप्रसूनभृदपि व्यसनं प्रयाति ।
वासः सितं सुरभिगौरसुमानुलेपभूषा दधच्च खलु मङ्गलमेति नूनम् ॥ १५७ ॥

बिभ्राणो मङ्गलद्रव्यं पृच्छको याति मङ्गलम् ।
रिक्तपाणिरमाङ्गल्यद्रव्यभृच्चाशुभं व्रजेत् ॥ १५८ ॥

## अन्यच्च तत्कालजम्

प्रश्ने यदुच्यते यच्च श्रूयते यच्च दृश्यते ।
तत्सादृश्येन सकलं प्रष्टुर्वाच्यं शुभाशुभम् ॥ १५९ ॥

यस्य कस्यापि कार्यस्य पृच्छायां प्रस्थितावपि ।
तत्कार्यसाधनं वस्तु दृष्टं चेत्तत्तु सिद्ध्यति ॥ १६० ॥

नववस्त्रद्वयादीनां दर्शनं करसङ्ग्रहे ।
सिद्धये तदसिद्ध्यै स्याद्वियोगस्तु कयोरपि ॥ १६१ ॥

यत्किञ्चित्कार्यमुद्दिश्य प्रस्थाने यदि पश्यति ।
सुवर्णं वा फलं वा स्याद्द्रव्यलाभो न संशयः ॥ १६२ ॥

प्रशस्तं पुष्पसामान्यं श्राद्धपुष्पं विनायुषि ।
प्रशस्तं वस्त्रसामान्यं नववस्त्रं विनायुषि ॥ १६३ ॥

हाहाखेदरवं क्षुतं च पतनं चैत्यध्वजादेस्तथा
वस्त्रच्छत्रपदत्रविक्षतिमपि ध्वंसार्थनानागिरः ।
क्रूराणां मृगपक्षिणां प्रतिदिशं वाचश्च दीपक्षयः
पातं पूर्णघटादिकस्य च बुधाः कष्टं निमित्तं विदुः ॥ १६४ ॥

कार्पासौषधकृष्णधान्यलवणं जालादिहिंसार्थकं
भस्माङ्गारमयश्च तक्रमुरगं पूर्तिं च विट्छर्दिते ।
भ्रान्तापन्नजडान्धमूकबधिरक्लीबांश्च संन्यासिनो
यद्यद्दृङ्मनसोरनिष्टमखिलं कष्टं निमित्तं विदुः ॥ १६५ ॥

वीणावेणुमृदङ्गशङ्खपटहध्वानं च भेरीरवं
गीतं मङ्गलमङ्गनां च गणिकां दध्यक्षतेक्ष्वादिकम् ।
दूर्वाचन्दनपूर्णकुम्भकुसुमं मालां फलं कन्यकां
घण्टां दीपसरोरुहे च शुभदं विद्यान्निमित्तं बुधः ॥ १६६ ॥

आमं मांसमथासवं मधुघृते धौतांशुकालेपनं
रत्नेभद्विजवाजिनश्च नृपतिं संवर्धमानं नरम् ।

देवं पाण्डुरचामरं सुमधुरस्निग्धान्नपाने शवं
विप्रौ च ज्वलदग्निमत्र शुभदं विद्यान्निमित्तं बुधः || १६७ ||

मृद्भाण्डं तैलयुक्तं पतति निजकरात् शिक्यते वाम्बुकुम्भं
दुग्धादेर्भाजनं वा सपदि मृतिकरं लोहपात्रं विशेषात् || १/२ ||

मार्जालयुद्धं कलहं कुटुम्बे रजस्वलास्त्री रजकस्य दर्शनम् ।
अकालवृष्टिश्च भुजङ्गदर्शनं पशुक्षुतं प्राणहराणि सप्त || १६८ ||

सर्वदा क्षुतमशोभनमादौ गोक्षुतं मरणमेव करोति || १६९ ||

छत्रं तोरणहृद्ययानशकटं स्तोत्रं च वेदध्वनिं
बद्धं चैकपशुं वृषं च मुकुरं स्वर्णं सवत्सां च गाम् ।
भक्ष्यं चोद्धृतमृत्तिकां बुधवरं यच्चान्यदिष्टं श्रुतं
दृष्टं श्रोत्रदृशोः शुभं तदखिलं प्रश्ने निमित्तं विदुः || १७० ||

लोकाच्छास्त्रमुखात्तथा गुरुमुखाद्यद्यन्निमित्तान्तरं
विज्ञातव्यमतः शुभाशुभाफलं प्राज्ञैः प्रयत्नादिह ।
यद्यत्पृच्छति पृच्छकोऽन्तिकगतं तन्नाशचिह्नं भवे-
न्नाशः स्यादिह तस्य तस्य न चिरात्तद्व्यत्यये व्यत्ययः || १७१ ||

देशदशाकुलकालस्वभावतो यच्छुभाशुभं भवति ।
तल्लक्षणं न फलदं प्रायो यस्मात् स्वभावोऽसौ || १७२ ||

राशिग्रहाणां सर्वत्र दुर्विज्ञेयं बलाबलम् ।
शकुनैर्जातसंवादं राशिग्रहफलं स्फुटम् || १७३ ||

ज्ञात्वैतत्सकलं सम्यक् समयादिशुभाशुभम् ।
एतैरेवाखिलं वक्तुं शक्यं प्रष्टुः शुभाशुभम् || १७४ ||

**|| इति प्रश्नानुक्रमे द्वितीयोऽध्यायः ||**

# ।। अथ तृतीयोऽध्यायः ।।

*फलनिर्देशक्रमः*

**पृच्छानिर्गममार्गमन्दिरगतिप्रश्नक्रियासम्भवं**
**सूत्रत्रिस्फुटजाष्टमङ्गलफलारूढोदयेन्दूद्भवम् ।**
**आयुः खेटवशाच्च जातकवशात्सञ्चिन्त्य भावान् परान्**
**देवानामनुकूलतादि च वदेद्बाधाभिचाराद्यपि ।। १ ।।**

## पृच्छानिर्गमः

प्रश्नकालोद्भवं बुद्ध्वा सदसत्समयादिकम् ।
निर्गच्छेत्समये जीवकालहोरादिके शुभे ।। २ ।।

निर्गच्छतोऽम्बरं सङ्गमेति भूमौ पतेच्च वा ।
छत्राद्यं यत्करस्थं वा भवेदेवाशुभाय तत् ।। ३ ।।

आगच्छ तिष्ठ मा गच्छ प्रविश क्व नु गच्छसि ।
इत्यादिवाचः प्रस्थाने भवन्त्यशुभदा दृढम् ।। ४ ।।

पाषाणादिषु पादस्खलनं स्तम्भादिके तथा शिरसः ।
नेष्टं निर्गमनेऽन्यान्यपि चिन्त्यानि लोकसिद्धानि ।। ५ ।।

## मार्गः

जन्मान्तरकृतं पुंसां शुभं वा यदि वाऽशुभम् ।
यत्तस्य शकुनः पाकं निवेदयति गच्छताम् ।। ६ ।।

पथ्यात्मानं नृपं सैन्ये पुरे चोद्दिश्य देवताम् ।
सार्थे प्रधानं साम्ये तु जातिविद्यावयोऽधिकम् ।। ७ ।।

पाषण्डाश्रमवर्णानां सवर्णाः कार्यसिद्धये ।
त एव विपरीताः स्युर्दूताः कार्यविपत्तये ।। ८ ।।

धनुःशतकपर्यन्तं पथि दृष्टं पुरो भुवि ।
शकुनं स्याच्छ्रुतं वाऽपि तथा तत्त्वविदो विदुः ।। ९ ।।

जन्तूनां श्रुतिताडने यदि तयोर्युद्धे क्षुते रोदने
क्रोधे पादविषाणपुच्छदलने दन्तक्षते मैथुने ।
प्रस्रावेऽपि च बन्धने स्वपुरतो दृष्टे च कोलाहले
प्राणत्यागनिरोधनार्तिसमये हानिः प्रयातुर्भवेत् ॥ १० ॥

लक्ष्मीलक्षणलक्षितक्षितिपतिक्षीरेक्षुदण्डेक्षणं
पक्षिस्वामिमहोक्षपक्षिकुलकक्षौद्राक्षतप्रेक्षणम् ।
रुद्राक्षक्षितिपालकोपकरणक्ष्मादेवयुग्मेक्षणं
क्षिप्रं क्षेमकरं प्रयाणसमये यातुश्च सुक्षेत्रदम् ॥ ११ ॥

पण्यस्त्री पुरुषान्विता स्वपुरतः पुत्रान्विता वाऽऽगता
चैवं गोमृगभृङ्गवानररुरुश्वाश्वाण्डजा भोगदाः ।
यद्युद्वाहवती प्रयातृसुखकृत्पत्नी सपुत्रार्थदा
सर्वं वस्तु शुभं सितं यदि भवेत्कृष्णं तु न प्रायशः ॥ १२ ॥

पथश्छेदो हि मार्जालगोधानकुलवानरैः ।
सर्पेन्धनपाषाणतृणानीतिश्च दोषकृत् ॥ १३ ॥

प्रदक्षिणं खगमृगा यान्तो नैवं श्वजम्बुकौ ।
अयुग्माश्च मृगाः शस्ताः शस्ता नित्यं च दर्शने ॥ १४ ॥

चाषभासभरद्वाजनकुलच्छागबर्हिणः ।
मत्स्यौघटीति पद्योक्तं निमित्तं च शुभप्रदम् ॥ १५ ॥

मार्जारडुण्डुभोलूकगोधाद्यशुभदर्शनम् ।
गौळया रुतं च नाशाय वामे दक्षे तथा क्षुतम् ॥ १६ ॥

प्रशस्ताः कीर्तने कोलगोधाऽहिशशजाहकाः ।
न दर्शने न विरुते वानरर्क्षावतोऽन्यथा ॥ १७ ॥

शृगालनकुलव्याघ्रचकोरोरगपोत्रिणः ।
गच्छन्तो दक्षिणे वामे श्वकाकाजमृगद्विपाः ॥ १८ ॥

दृष्टाः प्रशस्ता एते तु न शुभाः स्युर्विपर्ययात् ॥ १/२ ॥

**अशुभशकुने परिहारः**

एकादशादिमेऽनिष्टे द्वितीये शकुने पुनः ।
प्राणायामाः षोडश स्युस्तृतीये तु न च व्रजेत् ॥ १९ ॥

## मन्दिरगतिः

प्रश्ने तत्कालजं यद्यन्निर्गमे यद्यदध्वनि ।
प्रोक्तं प्रष्टृगृहप्राप्तौ तत्तत् प्रायेण चिन्त्यताम् ॥ २० ॥

आर्तालयं विशति दैवविदीत एतद्द्वारा निरेति यदि कोऽपि सरुङ् म्रियेत ।
द्वारा तयैव विशतीह यदीतरश्चेज्जीवेत्स नूनमिति मे गुरुणोपदिष्टम् ॥ २१ ॥

गृहान्तिकं प्रष्टुरिहाभियाते ततो वधूः प्रश्नविचारिणीत्थम् ।
विनिर्गता मूलफलोपपन्ना रजस्वलोन्मूलविनाशिनी स्यात् ॥ २२ ॥

वेदाध्ययनघोषश्च तथा पुण्याहनिस्वनः ।
गन्धश्च सुरभिर्वायुः सुखस्पर्शप्रदक्षिणः ॥ २३ ॥

वृषस्य चानुलोमस्य स्वनस्तद्वद्गवामपि ।
प्रवेशसमये प्रष्टुरारोग्यादिफलाप्तये ॥ २४ ॥

शयनासनयानानामुत्तानानां च दर्शनम् ।
न्युब्जानामितरेषां च पात्रादीनामशोभनम् ॥ २५ ॥

आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा ।
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥ २६ ॥

निवाते दीपनाशः स्यान्मन्दिरे यस्य रोगिणः ।
स न जीवति चुल्ल्यादौ चाग्निनाशः सतीन्धने ॥ २७ ॥

**॥ इति प्रश्नानुक्रमे तृतीयोऽध्यायः ॥**

* * *

## ॥ अथ चतुर्थोऽध्यायः ॥

### प्रश्नक्रियासम्भवः

स्नात्वा धृतसितवासा भृतभस्मा प्राङ्मुखः सुखासीनः ।
आलोच्याथ निमित्तं प्रश्नविधिं प्रारभेत गुरुभक्त्या ॥ १ ॥

अनासन्ने तु समये मध्याह्नोदययो रवेः ।
प्रश्नकर्म हि कर्तव्यं सुप्रसन्ने दिवाकरे ॥ २ ॥

प्रश्नार्थमासादितपत्रपूर्वान् छित्त्वा च भित्त्वा गुळिकस्थराशौ ।
प्रष्टृष्टमर्क्षे यदि निक्षिपेच्चेत्सद्यो मृतिः स्यान्न तु जीवदृष्टे ॥ ३ ॥

प्रश्नानुष्ठानसम्भारसम्भृतौ प्राक्तु भस्मनः ।
आनीतिर्मृतिदार्तस्य दीपस्य तु शुभप्रदा ॥ ४ ॥

दीपलक्षणम्

सर्वप्रश्नेषु सर्वेषु कर्मस्वपि विशेषतः ।
प्रसादेनैव दीपस्य भविष्यच्छुभमादिशेत् ॥ ५ ॥

मङ्गलार्थं दिवा रात्रौ प्रकाशाय शुभाय च ।
भुक्त्यादौ न्यस्यते दीपो योऽस्य लक्षणमुच्यते ॥ ६ ॥

वामावर्तो मलिनकिरणः सस्फुलिङ्गोऽल्पमूर्तिः
क्षिप्रं नाशं व्रजति विमलस्नेहवर्त्यन्वितोऽपि ।
दीपः पापं कथयति फलं शब्दवान्वेपथुश्च
व्याकीर्णार्चिर्विमलमसकृद्यश्च नाशं प्रयाति ॥ ७ ॥

दीपः संहतमूर्तिरायततनुर्निर्वेपथुर्दीप्तिमान्
निःशब्दो रुचिरः प्रदक्षिणगतिर्वैडूर्यहेमद्युतिः ।
लक्ष्मीं क्षिप्रमभिव्यनक्ति रुचिरां यश्चोच्छिको दृश्यते
शेषं लक्षणमग्निलक्षणसमं योज्यं यथा युक्तितः ॥ ८ ॥

स्नेहो यस्येह देहो भवति तदुदरे वर्तिनी वर्तिरात्मा
ज्वाला चायुस्तदीये विमलमलिनते सौख्यदुःखे क्रमेण ।
पात्रं गेहं समीरो मृदुपरुषगुणो बन्धुशत्रुस्वरूपः
प्रष्टुर्वृत्तं निकामं पिशुनयति महादेवतात्मा स दीपः ॥ ९ ॥

पूर्वाभिप्रेतदात्री शिखिनि शिखिभयं दक्षिणे प्राणहानि-
र्नैर्ऋत्यां विस्मृतिः स्याद्वरुणदिशि शिखा शान्तिदा वायुकोणे ।
शून्या मृत्युञ्जयी स्याद्धनददिशि शिखा शंविधत्ते शिवाख्ये
वह्नेरूर्ध्वा शिखैषा वितरति वपुषोऽभीष्टवस्तूनि सद्यः ॥ १० ॥

अर्के वीर्यान्विते ज्वाला प्रसन्ना मलिनाऽबले ।
स्नेहनैर्मल्यकृद्ग्लौर्बल्याविलत्वाय दुर्बलः ॥ ११ ॥

चरस्थेऽर्के चरं दीपं व्याचष्टे स्थिरगे स्थिरम् ।
बद्धं शृङ्खलया लम्बं द्विशरीरमुपेयिवान् ॥ १२ ॥

प्रारभ्योदयतः पुराङ्घ्रिरहिताम्भोराशिनाडीचर-
त्यर्कोऽजादिषु पञ्च पञ्च घटिकाश्चक्रे महीकल्पिते ।
कुड्यादौ घटितक्षितौ सुनिहितो वाऽर्के स्थिरस्थे चर-
स्थेऽसौ मर्त्यधृतस्ततोभयगते दीपोऽम्बरे लम्बितः ॥ १३ ॥

यत्र द्वादशधा विभज्य सुरतागारं भमर्कान्वितं
प्राच्यादीत्युदितक्रमादिह भवेद्दीपोऽथवास्यां दिशि ।
प्रागादीत्युदितार्कयुक्तभहरिद्भागे तु वीर्याधिके
यत्रार्को भ्रमणेषु दिक्षु भवने दीपस्थितिस्तत्र वा ॥ १४ ॥

स्नेहो गोमहिषादिजः खलु निजां होरां गते शीतगौ
भानोः केरतिलादिजोंऽशगृहयोर्वीर्यान्वितस्यादिगे ।
पूर्णः क्षीणतरोऽन्त्यगेऽथ कथयेद्वर्त्या गुणान् लग्नतो
दग्धादग्धविभागवर्णयुगलत्वादींश्च रीत्यानया ॥ १५ ॥

लग्ने कश्चन चेत् खगोऽस्य यदि नो लग्नेशितुर्वाससा
वर्तिः स्याद्रचिताऽथ वीर्यवशतो लग्नस्य वांशस्य वा ।

वर्णः स्याद्द्वितयस्य वा युगलता द्वन्द्वे विलग्ने पुन-
स्तद्दग्धेतरभागयोस्तु कथनं लग्नोदितैष्यांशतः ॥ १६ ॥

दीपः स्वच्छज्वलनमधिकश्रेयसे पृच्छकस्य
दीर्घायुः स्याद्धनसुखयशोवर्धनं दीर्घपुष्टौ ।
ह्रस्वे रोगं व्यसनमतुलं शब्दवानर्थहानि-
र्व्याकीर्णार्चिर्नृपरिपुभयं नाशने प्राणनाशः ॥ १७ ॥

**चक्रलेखनविधिः**

शुद्धतण्डुलसम्पूर्णप्रस्थदीपाद्यलंकृते ।
समे सुमृष्टसंसिक्ते चक्रं लिखतु भूतले ॥ १८ ॥

हस्तप्रमाणे चतुरश्रखण्डे षडङ्गुलांशैर्विभजेद्दलानि ।
चतुर्दलं पद्ममिहास्तु मध्ये चतुर्भिरन्यान्यजपूर्वभानि ॥ १९ ॥

प्रदक्षिणतया कार्यं राशिचक्रविलेखनम् ।
अनुलोमविलोमेन लेखने विघ्नसम्भवः ॥ २० ॥

स्थूलरेखा सुखकरी सूक्ष्मा दुःखप्रदायिनी ।
रेखाच्छेदो भवेत्प्रष्टुः सुखकार्यविघातकः ॥ २१ ॥

लिखिता सौम्यरेखा प्राग्यदि नूनं धनागमः ।
वारुणी यदि रोगाप्तिरैन्द्री चेत्सन्ततिर्भवेत् ॥ २२ ॥

याम्यरेखा यदि भवेन्मरणायैव पृच्छताम् ॥ १/२ ॥

चक्रस्य यत्र निम्नत्वमौन्नत्यं वाऽपि दृश्यते ॥ २३ ॥
प्रष्टुर्निवासभूमिश्च तत्र तत्र नतोन्नता ॥ २४ ॥

विलिख्य चक्रं प्रददाति किञ्चिद्द्रव्यं परस्मै यदि भूमिरेषा ।
परस्वतामेष्यति यत्परस्मादाधानमन्यत्क्षितिलाभशंसि ॥ २५ ॥

दृश्यन्ते दिशि यत्र यत्र मनुजा दूतस्य विश्वक्स्थिता
दिक्ष्वास्वासु गृहाणि सन्ति सदृशां जात्या च तैः संख्यया ।
आयानेन धनुष्मतोऽत्र हरिति स्थानं च शास्तुर्वदे-
द्व्यास्तद्दिशि योषितः कुपृथुकायाने पिशाचस्थितिः ॥ २६ ॥

विप्रायाने ब्रह्मरक्षोनिवासश्चोरोत्थापद्दुर्मतेरागमेन ।
दूतस्यैतत् सम्भवेद्यद्दिशायां प्रष्टुर्धाम्नस्तत्फलं तद्दिशि स्यात् ॥ २७ ॥

चक्रपूजा

चक्रं विलिख्यचरणौ प्रक्षाल्यतनुशोधनम् ।
आत्मपूजां गणेशार्चामपि कृत्वा महेश्वरम् ॥ २८ ॥

चक्रमध्यस्थिते पद्मे पीठपूजापुरस्सरम् ।
परिवारनिवेद्याढ्यं पञ्चाक्षर्या समर्चयेत् ॥ २९ ॥

ध्यानम्

कैलासाद्रीशकोणे सुरविटपितटे स्फाटिके मण्डपे सन्
मातङ्गारातिपीठोपरिपरिलसितं सेव्यमानं सुरौघैः ।
जानुस्थं वामबाहुं मृगमपि परशुं ज्ञानमुद्रां वहन्तं
नागोद्यद्योगवेष्टं ददतमृषिगणे ज्ञानमीशानमीडे ॥ ३० ॥

मेषाद्या राशयः स्वस्वस्थाने स्वाश्रितभे ग्रहाः ।
परिवारतया पूज्या गुळिकश्च स्वनामभिः ॥ ३१ ॥

ब्रह्मार्पणान्ते वाग्देवीं गुरूंश्चाप्यष्टमङ्गले ।
पुष्पैराराध्य वन्देत प्रदीपे च तथा श्रियम् ॥ ३२ ॥

अष्टमङ्गलानि

काञ्चनं दर्पणं पुष्पमक्षतं फलसञ्चयम् ।
ताम्बूलं वसनं ग्रन्थमष्टमङ्गलमिष्यते ॥ ३३ ॥

सत्यज्ञानपरब्रह्मज्योतिरानन्दरूपिणीम् ।
नौमि सर्वोत्तरोदात्तप्रश्नमालां सरस्वतीम् ॥ ३४ ॥

सत्यज्ञानप्रदायेष्टदेशकालप्रबोधिने ।
नमः श्रीगुरवे साक्षात्परमेश्वरमूर्तये ॥ ३५ ॥

अथ प्रक्षाल्य तोयेन स्वर्णं चन्दनभूषितम् ।
पत्रे विन्यस्य कुसुमैरक्षतैरपि योजयेत् ॥ ३६ ॥

वामहस्ते निधायाथ पिधायान्येन पाणिना ।
पञ्चाक्षरीं साष्टशतं मनूनन्यांश्च भक्तितः ॥ ३७ ॥

जप्त्वाथैकत्र विन्यस्य प्रारभेताष्टमङ्गलम् ।
संक्षेपेणाथ तत्कर्म कथ्यते गुरुणोदितम् ॥ ३८ ॥

कृत्वा दक्षिणतो राशिचक्रं प्राङ्मुख आसने ।
आसीनः फलकेऽभिन्ने वराटीः साष्टकं शतम् ॥ ३९ ॥

निधाय मन्त्रवत्प्रोक्ष्य गन्धपुष्पाक्षतैश्च ताः ।
अलंकृत्यार्चयेत्तासु शिवमावाह्य चक्रवत् ॥ ४० ॥

प्रागाद्याशासु सूर्यारार्यज्ञाच्छार्किविधूरगान् ।
अपि सम्पूज्य ताः स्पृष्ट्वा स्पृष्ट्वा साष्टशतं जपेत् ॥ ४१ ॥

पञ्चाक्षरीं मनूनन्यानपि गुर्वाननाच्छ्रुतान् ।
ततः सम्प्रार्थयेद्देवं गुरूनपि निजान् ग्रहान् ॥ ४२ ॥

प्रार्थनाश्लोकाः

एतन्नक्षत्रसञ्जातस्यैतनाम्नोऽस्य पृच्छतः ।
भूते च वर्तमाने च समये च भविष्यति ॥ ४३ ॥

शुभाशुभानि चेदानीं चिन्तितस्य विशेषतः ।
सम्भवासम्भवाद्यन्यान्यर्थपुत्रगृहादिषु ॥ ४४ ॥

शुभाशुभानि यान्येतान्यखिलान्यपि तत्त्वतः ।
युष्मत्प्रसादतः स्पष्टं मम चित्ते स्फुरन्त्विति ॥ ४५ ॥

ततः कन्या कुमारो वा स्नात्वा वस्त्राद्यलंकृतः ।
राशिग्रहस्थितिज्ञानशून्यो वा कश्चनापरः ॥ ४६ ॥

उपेत्याराधयेत्पुष्पैर्दीपविघ्नखगेश्वरान् ।
ततोऽस्य दक्षिणे हस्ते स्वर्णं साक्षतपुष्पकम् ॥ ४७ ॥

दद्यादेतद्वहन् सोऽपि कृत्वा चक्रप्रदक्षिणम् ।
पश्चात्समीपतस्तिष्ठेच्चक्रस्य प्राङ्मुखः सुधीः ॥ ४८ ॥

ततः प्रष्टा निजाभीष्टं ध्यायंस्तिष्ठतु साञ्जलिः ।
दैवज्ञोऽथ स्मरन् प्रष्टुरभीष्टं ता वराटिकाः ॥ ४९ ॥

संस्पृशन् संस्पृशन्मन्त्रं मूर्तित्वेपूर्वकं जपेत् ।
त्रिवारं तज्जपस्यान्ते दूतं ब्रूयान्न्यसेरिति ॥ ५० ॥

तदैव विन्यसेद्दूतः स्वर्णं निजकरस्थितम् ।
चक्रस्थभेषु चैकत्र दैवज्ञस्ता वराटिकाः ॥ ५१ ॥

विभजेत्त्रिरुदक्पूर्वं निमित्तानि च चिन्तयेत् ।
प्राक्पृच्छासमये यद्यच्छुभाशुभमुदीरितम् ॥ ५२ ॥

तत्तत्सकलमत्रापि चिन्त्यं स्पर्शशरादिकम् ।
अथ दूतः पदच्छायामानं कुर्यात् समक्षितौ ॥ ५३ ॥

**यस्मिन् राशौ स्थितं स्वर्णं स स्यादारूढसंज्ञकः ।**
**ज्ञात्वा दैवविदारूढं स्वर्णस्योत्तानतादि च ॥ ५४ ॥**

पृच्छकाय फलं किञ्चित्प्रोच्य पूजां समाप्य च ।
वराटीरष्टशस्त्यक्त्वा स्थानत्रितयतः पृथक् ॥ ५५ ॥

शिष्टसंख्यामपि ज्ञात्वा रक्षणीया वराटिकाः ॥ १/२ ॥

आरूढं स्वर्णसंस्थानं छायामप्यष्टमङ्गलम् ।
विलिखेन्मासयाताहः प्रष्टृतारापुरस्सरम् ॥ ५६ ॥

रक्तानि कुसुमान्यत्र गृह्यन्ते कैश्चनापरैः ।
शुक्लानि दृश्यते प्रायेणाद्य तुम्बाभिधार्तवम् ॥ ५७ ॥

**प्रबन्धः**

आरूढादुदये षष्ठे रिःफे वा निधने धने ।
आरूढं रुध्यते तत्र प्रश्नः कष्टफलप्रदः ॥ ५८ ॥

धनर्क्षं देवकोपेन वैरर्क्षं शत्रुबाधया ।
रन्ध्रं पैतृककोपाच्च द्वादशं प्रेतबाधया ॥ ५९ ॥

दशमं विप्रकोपेन चतुर्थं सर्पबाधया ।
आरूढं रुध्यते तस्मात्तच्छान्तिः प्रोच्यते बुधैः ॥ ६० ॥

## देवतानुग्रहचिन्तनम्

दैवानुकूल्यं प्रतिकूलतां वा विचार्य सत्यां प्रतिकूलतायाम् ।
तदानुकूल्याय विधिर्विधेयो यतस्ततः सम्प्रति कथ्यते तत् ॥ ६१ ॥

सर्वेश्वराणां धिषणेऽस्ति नित्यं सान्निध्यमस्माद्धिषणेऽनुकूले ।
प्रायोऽनुकूलाः सकलाश्च देवास्तत्प्रातिकूल्ये सति नानुकूलाः ॥ ६२ ॥

सौम्यानामुदयश्च दृष्टिरमराचार्यस्थितिश्चेप्सिते ।
भावे चाभिमते तथेतरखगा देवस्य तेऽनुग्रहम् ॥ ६३ ॥

ब्रूयुः पापदृगन्वयानभिमतस्थानस्थसर्वग्रहाः
कोपं साशुभभावहेतुकमिदं तं वाऽथ भावं प्रति ॥ ६४ ॥

## ताम्बूलचिन्तनम्

ताम्बूलाग्रे निवसति रमा मध्यतो वागधीशा
पृष्ठे ज्येष्ठा हिमगिरिसुता वामभागेऽन्यतो भूः ।
अन्तर्विष्णुर्बहिरुडुपतिः शङ्कराजौ च कोणे
शक्रादित्यावुपरि मदनः सर्वतो नागवल्याः ॥ ६५ ॥

ताम्बूलैः प्रष्टृदत्तैरपि फलमखिलास्तस्य वक्तव्यमेवं
प्रारभ्योपर्यधस्ताद्गणनमिह वपुःपूर्वमह्नोऽर्धयोः स्यात् ।
म्लानिर्क्षत्याद्युपेतं तदयुतमपि यद्भावसम्बन्धिपत्रं
तस्य व्याध्याद्यनिष्टं भवति शुभमपि प्राप्तिसंवर्धनाद्यम् ॥ ६६ ॥

ताम्बूलमेकं दुःखाय द्वितीयं तु धनक्षयम् ।
तृतीयं तु विनाशाय चतुःपञ्चशुभावहम् ॥ ६७ ॥

अङ्गुलद्वयसंयुक्तं ह्रस्वं दीर्घं षडङ्गुलम् ।
दीर्घह्रस्वविहीनश्च पत्रं भावस्य पुष्टिदम् ॥ ६८ ॥

ताम्बूलसंख्यां द्विगुणां शरघ्नां सैकां हरेत् सप्तभिरत्र शिष्टैः ।
सूर्यादिकानामुदयोऽत्र कल्प्यो ग्रहोदयो यत्र स लग्नराशिः ॥ ६९ ॥

दुःखाय भानुरुदितः सुखकृच्छशाङ्कः प्रष्टुः कुजः कलहकृद्धनदौ ज्ञजीवौ ।
शुक्रोऽखिलाभिमतकृन्मरणाय मन्दो लग्नादिभावविहगैश्च वदेत्फलानि ॥ ७० ॥

छिन्ने ताम्बूलपत्रे धनविभवकृतो वैरबन्धो बलीयान्
तत्रत्यानां नराणां निरवधिकविरोधोऽखिलप्रेततत्त्वात् ।
देवानां मूलभाजां भवति खलु शिलादारुभेदोऽशुचित्वं
तेनारिष्टं जनानां भवति बहुविधं रोगबाधाभिधेयम् ॥ ७१ ॥

द्वारे ताम्बूलपत्रे भवति खलु नृणां पूर्वपुण्यस्य दोषो
वह्नेर्भीतिश्च भूमीसुरकृतसकलाद्यामयप्रेतकोपाः ।
नागे निन्द्यं च भूमीरुहविटपहतिं पुष्पवल्लीविपत्तिं
कृत्वा भोगीन्द्रशापादधिगतपिटकं देवमर्त्येषु वाच्यम् ॥ ७२ ॥

सरन्ध्रं पूर्वभागे तु ताम्बूले वनदेवता ।
यमरन्ध्रे कुजप्रेतो भ्रूणप्रेतोऽथवा भवेत् ॥ ७३ ॥

वारुणे तु जलप्रेतो धनदे वित्तवैरतः ।
मध्ये त्वाकाशपाशादिसम्भूतप्रेतसञ्चयः ॥ ७४ ॥

ताम्बूलं यदि शुक्लपक्षजनितं दक्षोन्नतं सम्भवे-
च्छुक्लाभं क्षतिदीर्घह्रस्वरहितं नो दूषितं जन्तुभिः ।
स्थूलाभिश्च सिराभिरात्तबलयुक् तच्छोभनं पृच्छतां
दीर्घायुष्यकरं सुखार्थजयदं भावस्य पुष्टिप्रदम् ॥ ७५ ॥

कृष्णाभं क्रिमिदूषणेन सहितं म्लानिक्षतिभ्यां युतं
वामोच्छ्रायमतीव दीर्घमथवा ह्रस्वं तथा दुर्बलम् ।
सूक्ष्माभिश्च सिराभिरन्विततनुः पक्षेऽसिते स्याद्दलं
तच्छीघ्रं बहुशोकरोगभयदं मृत्युप्रदं पृच्छताम् ॥ ७६ ॥

एकद्वित्रिचतुःपञ्चषड्भिः पूगैः फलानि च ।
लाभोऽलाभः सुखं दुःखमायुर्मरणमेव च ॥ ७७ ॥

एकपूगं सुखारोग्यं द्विपूगं निष्फलं भवेत् ।
अतिश्रेष्ठं त्रिपूगं तु अधिको नैव दुःखदः ॥ ७८ ॥
समयादीन् विचिन्त्याथ सूत्रादीन् चिन्तयेद्बुधः ॥ ॥ १/२ ॥

**॥ इति प्रश्नानुक्रमे चतुर्थोऽध्यायः ॥**

* * *

# || अथ पञ्चमोऽध्यायः ||

तन्त्रे सुपरिज्ञाते लग्ने छायाम्बुयन्त्रसंविदिते ।
होरार्थे च सुरूढे नादेष्टुर्भारती वन्ध्या || १ ||

<u>ग्रहस्फुटीकरणम्</u>

ज्ञेयोऽत्र प्रथमं हि जन्मसमयश्छायादियन्त्रैः स्फुट-
स्तत्कालप्रभवा विलग्नसहिताः कार्यास्ततश्च ग्रहाः ।
सिद्धान्तोक्तपरिस्फुटोपकरणैस्ते चासकृत्कर्मणा
भावाः खेटदृशो बलानि च ततस्तेषां विचार्याणि षट् || २ ||

इष्टनाडीगुणा भुक्तिः षष्ट्या भक्ता कलादिकम् ।
गते शोध्यं युतं गम्ये कृत्वा तात्कालिको भवेत् || ३ ||

<u>लग्नसाधनम्</u>

तत्कालार्कः सायनः स्वोदयघ्ना भोग्यांशाः खत्र्युद्धृता भोग्यकालः ।
एवं यातांशैर्भवेद्यातकालो भोग्यः शोध्योऽभीष्टनाडीपलेभ्यः || ४ ||

तदनु जहीहि गृहोदयांश्च शेषं गगनगुणघ्नमशुद्धहृल्लवाद्यम् ।
सहितमजादिगृहैरशुद्धपूर्वैर्भवति विलग्नमतोऽयनांशहीनम् || ५ ||

<u>गुळिकानयनम्</u>

चरखरजयभयनृपतनुखनिनाड्यो भास्करादिवारेषु ।
दिनमानघटीगुणिता नीलहृता गुळिकनाडिकाः स्पष्टाः ।
लग्नवदानेतव्यो राश्यंशकलादिरूपको गुळिकः || ६ ||

<u>त्रिस्फुटम्</u>

एवं लग्नं विधुं मान्दिमानीय विलिखेत्पृथक् ।
तेषां त्रयाणां संयोगस्त्रिस्फुटं विलिखेच्च तत् || ७ ||

<u>चतुःस्फुटम्</u>

लग्नेन्दुमान्दिसंयोगस्त्रिस्फुटं तच्च भानुयुक् ।

**पञ्चस्फुटम्**

चतुःस्फुटं राहुयुक्तमेतत्पञ्चस्फुटं भवेत् ॥ ८ ॥

**प्राणदेहमृत्युस्फुटाः**

लग्नेन्दू मानदानाभ्यां हत्वा मान्दिं क्षिपेद्द्वयोः ।
प्राणदेहौ क्रमात् स्यातां पुनर्मान्दिः सुताडितः ।
भानुयुक्तो भवेन्मृत्युर्विलिखेत्त्रीनिमानपि ॥ ९ ॥

**आरूढस्फुटः**

लग्नस्फुटस्य भं त्यक्त्वा कलाभागांश्च निक्षिपेत् ।
आरूढभे स्फुटावाप्त्या अमुष्य विलिखेच्च तत् ॥ १० ॥

यदा यश्चैव सिद्धान्तो गणिते दृक्समो भवेत् ।
तदा तेनैव संसाध्यं जातकं गणयेद्बुधः ॥ ११ ॥

योगे ग्रहाणां ग्रहणेऽर्कसोमयोर्मौढ्ये तथा वक्रगतौ च पञ्चसु ।
दृष्टानुरूपं करणं यदन्वहं तेन ग्रहेन्द्रान् गणयेत्त्रिवारम् ॥ १२ ॥

**॥ इति प्रश्नानुक्रमे पञ्चमोऽध्यायः ॥**

* * *

## ।। अथ षष्ठोऽध्यायः ।।

### सूत्रम्

आरूढोदयलग्नाभ्यां सूत्रं सामान्यसंज्ञितम् ।
तदीशाभ्यां तु यच्चिन्त्यं तत्स्यादधिपसंज्ञकम् ।। १ ।।

लग्नांशारूढराशिभ्यां सूत्रमंशकसंज्ञितम् ।
लग्नोडुपृच्छकोडुभ्यां चिन्त्यं नक्षत्रसंज्ञितम् ।। २ ।।

आरूढतद्दशमतो महासूत्रं विचिन्तयेत् ।। १/२ ।।

पृथ्वीसामान्यसूत्रं स्यादापस्त्वधिपसंज्ञिताः ।
तेजस्त्वंशकसूत्रं स्यादुडुसूत्रं तु मारुतः ।। ३ ।।

आकाशस्तु महासूत्रमित्येतत्सूत्रपञ्चकम् ।
प्राधान्येन विचिन्त्यं स्यात्पञ्चभूतात्मकत्वतः ।। ४ ।।

**पृथ्वीतेजस्सूत्रयोः निर्णयः**

चरे चरस्थिरद्वन्द्वाः स्थिरे द्वन्द्वचरस्थिराः ।
द्वन्द्वे स्थिरोभयचरा जीवो रोगो मृतिः क्रमात् ।। ५ ।।

**अप्सूत्रस्य निर्णयः**

आरूढस्य च लग्नस्य पत्योरैक्ये च सौहृदे। ।। १/२ ।।

जीवसूत्रं विजानीयात्समत्वे रोगदं भवेत् ।
तयोः शात्रवभावे तु सूत्रं तु मरणप्रदम् ।। ६ ।।

**वायुसूत्रनिर्णयः**

गणयेल्लग्ननक्षत्रादारभ्य प्रष्टृजन्मभम् ।। १/२ ।।

त्रिभिस्तां विभजेत्संख्यामेकशेषे तु जीवकृत् ।
द्विशेषे रोगदं सूत्रं निश्शेषे मरणप्रदम् ।। ७ ।।

**आकाशसूत्रनिर्णयः**

आरूढतद्दशमयोर्द्वितयं चन्द्रराशिगम् ।
यदि जीवनदं सूत्रं द्वयं चेत्सूर्यराशिगम् ।। ८ ।।

मृत्युसूत्रं तदा ज्ञेयं यदा तु पुनरेनयोः ।
एकं चान्द्रं परं सौरं रोगसूत्रं तदा भवेत् ॥ ९ ॥

सिंहः कन्या तुलाली च कुम्भान्त्यौ सूर्यराशयः ।
अन्ये तु राशयश्चान्द्रा द्युनिशाराशयश्च ते ॥ १० ॥

## सूत्राणां फलानि

जीवसूत्रफलं दीर्घमायू रुक्शमनादि च ।
रोगोत्पत्तिश्च रुग्दैर्घ्यं रोगसूत्रफलं मतम् ॥ ११ ॥

मृतिसूत्रफलं मृत्युः प्रष्टुः सम्बन्धिनामपि ॥ १/२ ॥

प्रेप्सिताप्तिरपि प्रष्टुः सूत्रे जीवनदायिनि ।
रोगदे कार्यनाशादिर्दुःखं भीरपि मृत्युदे ॥ १२ ॥

आयुर्वीर्यं धनमपि तथा वर्धते जीवसूत्रे
रुक्सूत्रं चेद्धनहतिमनोभङ्गदेहप्रपीडाः ।
भीरुग्वृद्धिर्दिनमनुमनःकर्मभङ्गोऽन्त्यसूत्रे
प्रष्टुर्वाच्यं फलमिति दृढं सर्वपृच्छासु सूत्रैः ॥ १३ ॥

सूत्रं यद्भूतसम्बन्धि मृत्युकृद्वाथरोगकृत् ।
तद्भूतांशभवान् देहे रोगान् प्रष्टुर्विनिर्दिशेत् ॥ १४ ॥

मांसास्थित्वक्सिरारोम पृथ्वी देहभृतां तनौ ।
स्वेदासृङ्मूत्रशुक्लास्यतोयं तोयमुदाहृतम् ॥ १५ ॥

क्षुत्तृडालस्यनिद्राभास्तेजोऽङ्गचलनं मरुत् ॥ १/२ ॥

द्वेषरागौ च मोहश्च साध्वसं च जरा नभः ।
एवं हि सर्वजन्तूनां पञ्चभूतमयी तनुः ॥ १६ ॥

नक्षत्राधिपसूत्रे द्वे वर्तमानफलप्रदे ।
सामान्यं भूतकालेऽन्ये भविष्यत्फलसूचके ॥ १७ ॥

लग्नादापञ्चमगैरानवमस्थैश्च पञ्चमान्नवमात् ।
आलग्नगैरपि भवद्भावि च भूतं शुभाशुभं ज्ञेयम् ॥ १८ ॥

सूत्राणां त्रितयेऽत्र जीवनकरे चांशेशयोः सौहृदे
शस्ते त्रिस्फुटदूतलक्षणदशाछिद्रादिके चाखिले।
अत्यासन्नमृतेरपीह न मृतिर्मिश्रेऽथ सूत्रादिके
जीवेत्कर्मभिरेव नैव सुकरं दोषेऽधिके जीवनम् ॥ १९ ॥

पृथ्वीसूत्रफलम्

पृथ्वीसूत्रे च जीवे तदनु विधुसुते वीर्ययुक्ते विलग्नात्
सुस्थे तद्रश्मिभागैः समसुदृढतरा भूमयोऽस्मिन् भजन्ते।
तद्धातुद्रव्यलाभो भवति च सुहृदां वृद्धिरन्नादिकानां
स्वास्थ्यं दुःस्थे विवीर्ये विविधधनहतिः प्रष्टृदेहामयाद्यम् ॥ २० ॥

रोगदे पृथिविसूत्रगे बुधे वीर्यवत्यभिमतस्थिते तथा।
भूमिवादजयमप्यृणक्षयं व्यत्यये सति विपर्ययं फलम् ॥ २१ ॥

पृथ्वीसूत्रे मृतिमुपगते ज्ञे विवीर्येऽतिदुःस्थे तद्राश्यंशैर्निगदितभुवां प्राणिनामेति नाशम्।
तद्धात्वादिक्षयमसुहृदां वर्धनं मित्रवैरं मांसास्थित्वङ्मुखसुखहतिं प्रष्टृदेहामयाद्यम् ॥ २२ ॥

अप्सूत्रफलम्

सूत्रे चाम्बुनि जीवने भृगुसुते सुस्थे बलाढ्ये तथा
मर्त्यानां कृषिगोगजाश्वविभवादीनां शुभं सम्भवेत्।
सद्रत्नाम्बरभूषणाम्बरसुहृत्साफल्यरूप्यादिकं
वापीकूपगुणादिकं च विबले मिश्रे च मिश्रं फलम् ॥ २३ ॥

वारिसूत्रमथ रोगदं यदा भार्गवश्च विबलोऽनभीष्टगः।
श्वावशोफमुखरोगभाग् भवेदामयं जलभवं समेति वा ॥ २४ ॥

मृतिकरेऽम्बुनि चेद् भृगुजेऽबले शनिसुताश्रितभेश्वरसंयुते।
सपदि मानुषगोरजताम्बरप्रमुखनाशमथाम्बुरुजं वदेत् ॥ २५ ॥

तेजःसूत्रफलम्

उपचयेऽवनिजेऽथ बलान्विते यदि च जीवनदेऽप्यनले भवेत्।
पशुमहीकनकादिसमागमः सहजसौख्यमरोगमरेर्जयः ॥ २६ ॥

भूपुत्रे विबलेऽनले यदि रुजां प्राप्ते च दुःस्थानगे
पापव्योमचरैः समीक्षितयुते पापान्तरस्थेऽथवा।

सर्पाद्यैरनलेन भीतिमवनीवादं च पित्तामयं
कुर्यादायुधतः क्षतिं च कलहं त्वग्दोषमस्थिस्रुतिम् ॥ २७ ॥

व्ययविनाशगतेऽवनिजेऽनले यदि मृतौ मरणं हि चतुष्पदाम् ।
क्षितिविवादमरातिजयादिभिर्विविधनाशमुपैति मतिभ्रमम् ॥ २८ ॥

**वायुसूत्रफलम्**

जीवेऽनिले भवति सूर्यसुते बलाढ्ये
लाभारिविक्रमगते यदि वा नराणाम् ।
कृष्यादिसिद्धिपशुमाहिषभृत्यसम्प-
च्चण्डाललब्धिमयसां समुपैति लाभम् ॥ २९ ॥

सूत्रे वायौ रुजमुपगते सूर्यपुत्रे च दुःस्थे
वीर्योने वा गुळिकसहितांशर्क्षपेणान्विते वा ।
भूमेर्वादं निजपशुकृषिप्रेष्यनाशामयाद्यं
दुःखाधिक्यं निजजनकृतं मानभङ्गं समेति ॥ ३० ॥

नीचारातिगृहस्थितेऽर्कतनये दुःस्थेऽष्टमाधीश्वरे
मान्द्यारूढपतौ तदीक्षितयुते वायौ मृतौ चेत्तदा ।
चोरारातिभयं श्वगोकृषिविनाशेळाविवादादिकं
वातापस्मृतिभक्तरोधपिटकाव्याधींश्च तत्रादिशेत् ॥ ३१ ॥

**आकाशसूत्रफलम्**

जीवे सूत्रे यदा वा वियति बलयुते देवपूज्ये च सुस्थे
देहस्वास्थ्यं नराणां निखिलधनयशःपुत्रसिद्धिं करोति ।
हेम्नां निध्यादिकानां पशुगजतुरगाणां च लाभः प्रमोदः
साधूनां सद्द्विजार्च्याहुतियजनविधानेन सत्कर्मसिद्धिः ॥ ३२ ॥

जीवेऽनिष्टगते वियत्यथ गदे नीचारिमौढ्योपगे
शापाद्यं गुरुविप्रकोपजनितं देवप्रकोपोऽपि वा ।
तस्माद्देहरुजं क्षयज्वरभवां श्लेष्मप्रपीडां वदेत्
पुत्राणामपि चित्तविभ्रममथो वित्तक्षयं वा नृणाम् ॥ ३३ ॥

वियति यदि मृतौ चेद्देवपूज्येऽतिदुःस्थे निखिलधनविनाशं प्रष्टृदेहप्रणाशम् ।
स्वजनगुरुविरोधं धीभ्रमं श्लेष्मरोगं सुखसुतपशुनाशं निर्दिशेत्सूक्ष्मबुद्धिः ॥ ३४ ॥

कर्मार्थसत्सम्पदमर्थसिद्धिं दीर्घायुरारोग्यविवर्धनं च ।
सत्कर्मसिद्धिं स्वजनप्रसादं सुखं नराणामपि जीवसूत्रे ॥ ३५ ॥

रोगाद्यनर्थानपि राजकोपं दारिद्र्यदेहामयवित्तनाशान् ।
तथा मनःकुण्ठितभाग्यहानिः सुखार्थनाशौ रुजि चात्र सूत्रे ॥ ३६ ॥

धान्यादिनाशं स्वजनैर्विरोधं कृष्यादिसम्पत्क्षयकीर्तिहानिम् ।
भयं रिपुभ्योऽपि च रोगवृद्धिं विवादवृद्धिं खलु रोगसूत्रे ॥ ३७ ॥

पशुकृषिधनहानिं देहरोगं च तापं मलिनहृदयभावं पुत्रभार्याविपत्तिम् ।
मरणहरणविघ्नान् भूपतेर्द्वेषलाभं मृतिमरिकृतदोषं प्राप्नुयान्मृत्युसूत्रे ॥ ३८ ॥

सूत्राधिपे तुङ्गनिजत्रिकोणे स्वक्षेत्रगे मित्रभसंयुते वा ।
दीर्घायुरारोग्यविवर्धनं च सुस्थे च खेटे सुखमेव वाच्यम् ॥ ३९ ॥

सूत्रशब्दोक्तसप्तविंशतिसूत्रनिरूपणम्

पञ्चैव स्युर्महान्ति द्विगृहनवतरण्यंशतन्नायकैः ष-
ण्णाड्यैकं मङ्गलाद् द्वे चतुरुभययुतिभ्यामुभे मान्दिनैकम् ।
त्रीणि स्वर्णात्तथैकं निहितवत उभे त्र्यंशपैस्तत्स्फुटाभ्यां
छत्राद् द्वे चैकमेव त्रिभत इह तथाप्येकमारूढनाथात् ॥ ४० ॥

गतनाडिकासूत्रम्

गतविघटीनीतिवधादष्टादशभक्तशिष्टसंख्याभिः ।
रसरविधृतिसंख्यातैर्ज्ञेयं जीवादिनाडिकासूत्रम् ॥ ४१ ॥

अष्टमङ्गलसूत्रे

स्थानेषु शिष्टसंख्यानां संयोगे तु भवेदतः ।
वेदार्कनखसंख्याभिर्जीवो रोगो मृतिः क्रमात् ॥ ४२ ॥

अष्टमङ्गलमध्यस्थसंख्याभिस्तु क्रमाद्भवेत् ।
जीवो रोगश्च मोहश्च मरणं च पुनः क्रमात् ॥ ४३ ॥

### मान्दिसूत्रम्

मान्दौ केन्द्रगते मृत्यू रोगः फणपरस्थिते ।
आपोक्लिमस्थिते जीवो मान्दिसूत्रमितीरितम् ॥ ४४ ॥

### त्रीणि स्वर्णसूत्राणि

पुष्पाक्षतोपरि स्वर्णमुत्तानं पृच्छकायुषे ।
तिर्यग्रोगकरं ज्ञेयं न्यक्च मृत्युप्रदं भवेत् ॥ ४५ ॥
ऊर्ध्वं मध्यमधस्ताच्च तथोत्तानादिभिश्च वा ।
पूर्वोदित्याश्च प्रतीच्यामन्यास्वाशासु च प्लुवैः ॥ ४६ ॥
स्थितिभिश्चोर्ध्ववक्त्राद्यैर्दिक्प्लुवत्वेन च त्रिधा ।
त्रीणि सूत्राणि विद्यन्ते जीवो रोगो मृतिः क्रमात् ॥ ४७ ॥

### दूतसूत्रम्

स्वर्णं न्यस्योत्तरायाने दूते जीवः प्रकीर्तितः ।
रोगश्च पश्चिमे याने मृतिसूत्रं तु दक्षिणे ॥ ४८ ॥

### छत्रसूत्रे

आरूढच्छत्रराशिभ्यां छत्रसूत्रमुदाहृतम् ।
तयोरधिपयोश्चैव च्छत्रसूत्रद्वयं स्मृतम् ॥ ४९ ॥

### त्रिभसूत्रम्

छत्रारूढोदयभैर्मिथस्त्रिकोणस्थितैस्त्रिभिर्जीवः ।
द्वाभ्यां बहुरोगकरं तदन्यथास्थैस्तथा मरणम् ॥ ५० ॥

### आरूढनाथसूत्रम्

होरानाथगृहोच्चमित्रभवनं यातेऽधिरूढाधिपे
जीवः स्यात्समराशिगे सति गदो मृत्युर्विपक्षर्क्षगे ।
एवं सार्थकसंज्ञसूत्रमखिलं संचिन्त्य सम्पृच्छता-
मादेश्यं विदुषा शुभाशुभफलं सर्वत्र निःसंशयम् ॥ ५१ ॥

### वारसूत्रम्

लग्नेशवाराधिपयोर्द्वयोस्तथा सुहृत्समामित्रतया च सन्ततम् ।
जीवं च रोगं च मृतिं च निर्दिशेत्तत्कालबन्ध्वाद्यमपीह चिन्त्यते ॥ ५२ ॥

**नक्षत्रसूत्रम्**

लग्नोडुतः पृच्छकजन्मभान्तं ताराणि सङ्गण्य हरेच्च रामैः ।
शून्ये मृतिर्जीवनमेकशेषे रोगो द्विशेषे तदिहोडुसूत्रम् ॥ ५३ ॥

**तिथिसूत्रम्**

तिथिसंयुक्तभं यत्तन्निहतं तिथिसंख्यया ।
त्रिभिर्भक्तं क्रमाच्छिष्टमेकाद्यं जीवरुङ्मृतिः ॥ ५४ ॥

**करणसूत्रम्**

करणे घटिकां तत्र करणेन हतां पुनः ।
त्रिभिर्हरेच्च तच्छिष्टैर्जीवो रोगो मृतिः क्रमात् ॥ ५५ ॥

**योगसूत्रम्**

योगभाञ्जन्मतारान्तं गणयित्वा शरैर्हते ।
त्रिभिर्हृते च तच्छिष्टं जीवो रोगो मृतिः क्रमात् ॥ ५६ ॥

## त्रिस्फुटम्

**त्रिस्फुटादिनिरूपणम्**

एवं लग्नं विधुं मान्दिमानीय विलिखेत् पृथक् ।
तेषां त्रयाणां सम्बन्धस्त्रिस्फुटं विलिखेच्च तत् ॥ ५७ ॥

कुळीरभृङ्गमत्स्येषु दोषदं स्याद्यथोत्तरम् ।
तत्राप्यहीन्द्रपौष्णेषु तथैव त्रिस्फुटं भवेत् ॥ ५८ ॥

कर्किवृश्चिकमीनानां त्रिस्फुटं चरमांशगम् ।
मृत्युप्रदं भवेत्प्रष्टुरब्दमासदिनैः क्रमात् ॥ ५९ ॥

त्रिस्फुटं नवहतं निहन्त्विनैर्भं विना यदि तदृक्षसन्धिगम् ।
जन्मगं यदि च तत्त्रिकोणगं मृत्युदं भवति पृच्छतां ध्रुवम् ॥ ६० ॥

मेषात्केसरिणस्तथैव धनुषो भानां चतुष्कं क्रमात्
सृष्टिस्थानविनाशसंज्ञमजतो दस्रात्तथा भानि च ।
त्रीणि त्रीणि नवांशका भवनवन्नाशर्क्षसन्ध्याह्वये-
ष्वष्टाशीतितमांशकादिषु तथा नो शोभनं त्रिस्फुटम् ॥ ६१ ॥

संयुक्तं गुळिकेन वा यदि खरैर्नो शोभनं त्रिस्फुटं
तत्र स्यात्तदुडूद्भवो यदि निजे गेहेऽस्य कल्प्यो गदः ।
दोषाणां नवकेन चान्वितमिदं प्रष्टुर्विपत्त्यै भवेत्
सृष्ट्यर्क्षादिगतं च सद्ग्रहयुतं दीर्घायुरारोग्यदम् ॥ ६२ ॥

आढ्यक्षोणिसुरागमो विधनविप्रायानमग्नेर्भयं
वासोहानिरथ क्रमात्कलहभग्नायानमह्यागमः ।
भूदेवत्रितयागमोऽथ चतुरङ्ग्यापच्च बन्ध्वागमो
मृत्योर्लक्षणमश्विभादिनवकत्रय्याश्रिते त्रिस्फुटे ॥ ६३ ॥

यस्मिन् राशौ नवांशे वा त्रिस्फुटं तद्गते विधौ ।
त्रिकोणस्थेऽथवार्के वा प्रोक्तलक्षणसम्भवः ॥ ६४ ॥

मूर्धोष्णज्वरतापकृद्रविरतीसारं सशीर्मं कुजः
स्तम्भं वाङ्मनसोः करोत्यपि बुधो दृक्पारवश्यं गुरुः ।
बुद्धिभ्रंशशरीरतोदकृदतः शोफं भृगुः पाददो-
स्सङ्कोचं कुरुतेऽर्कजोऽथ पतनं राहुः शिखी भौमवत् ॥ ६५ ॥

सूर्याद्यंशकसंस्थिते रविमुखैरप्यन्विते त्रिस्फुटे
तेषामीरित आमयो यदि भवेत्प्रष्टुर्मृतिः स्याद्ध्रुवम ।
यत्र त्रिस्फुटमङ्कनिघ्नमुडुनि स्यात्तत्र भे स्याद्रुजः
प्रारम्भोऽथ ततः परोडुनि भवेन्मोहस्तृतीये मृतिः ॥ ६६ ॥

संहारगमसद्युक्तं प्रष्टुर्देहांशकादिगम् ।
जन्मतारात्रयस्थं च नियमेन मृतिप्रदम् ॥ ६७ ॥

सृष्टिखण्डगृहोडुस्थमथवा शुभसंयुतम् ।
यद्वाजहरिचापांशगतं त्रिस्फुटमायुषे ॥ ६८ ॥

त्रिस्फुटस्य दृगाणादिवर्गेशाश्रितराशिपैः ।
तातमातृभ्रातृबन्धुपुत्रभार्याशुभाशुभम् ॥ ६९ ॥

सगुणैस्तैः शुभं वाच्यं सदोषैश्च तथाशुभम् ।
दोषा दुर्बलताऽनिष्टस्थितिपापान्वयादिकाः ॥ ७० ॥

इष्टभावस्थितिवीर्यं सद्योगेक्षे च तद्गुणाः ।
द्रेक्काणाद्यधिपैरेवं कैश्चिदेवं निरूप्यते ॥ ७१ ॥

त्रिस्फुटेऽर्कादिभिर्युक्ते पित्रादीनामशोभनम् ।
चतुष्पदांशके भे वा त्रिस्फुटं पापयुग्यदि ।
वाच्यश्चतुष्पदां नाश एवं युक्त्या विचिन्त्यताम् ॥ ७२ ॥

त्रिस्फुटस्यैष्यनाडीभिरानीय भदशां तथा ।
अपहारं छिद्रमतो वत्सरान्तः फलं वदेत् ॥ ७३ ॥

लग्नेन्दुमान्दिसंयोगस्त्रिस्फुटं तच्च भानुयुक् ।
चतुःस्फुटं राहुयुक्तमेतत् पञ्चस्फुटं भवेत् ॥ ७४ ॥

योंऽशस्त्रिस्फुटगोऽस्य यातघटिका धीघ्ना विभज्य स्थिरैः
शिष्टं त्रिस्फुटतारकादि गणयेदत्रागतं मृत्युभम् ।
तारं चाथ चतुःस्फुटस्थमिह तु व्याधेः शमः स्याद्यदि
प्रष्टुस्तर्हि चतुःस्फुटोडुजनुषं बन्धुं विशेदामयः ॥ ७५ ॥

लग्नाहिमान्दीन्दुरविस्फुटानां योगे भवेयुर्यदि जन्मभानि ।
वधर्क्षवैनाशिकपौष्णभानि मृत्युर्विपत्प्रत्यरयोश्च सद्यः ॥ ७६ ॥

## प्राणादित्रयम्

लग्नस्यांशमसुं वपुः शशभृतो मान्देश्च मृत्युं विदु-
स्तद्योगेक्षणवर्जितौ वपुरसू युक्तेक्षितौ चेन्मिथः ।
दीर्घायुर्दृढमादिशेद्यदि तनोर्मृत्योर्युतीक्षादिकं
पीडा स्याद्वपुषो रुजाथ तदसोर्मोहप्रदं पृच्छताम् ॥ ७७ ॥

द्वन्द्वांशे यदि लग्नचन्द्रगुळिका मृत्युप्रदा रोगदाः
प्रष्टुस्ते स्थिरभागगा यदि चरांशेष्वायुरारोग्यदाः ।
अन्योन्यं यदि ते त्रिकोणभगताभागा महारोगदा
दृष्टा मोहकरा युता मरणदाः कर्किंत्रिकोणे दृढम् ॥ ७८ ॥

प्राग्लग्नं पञ्चनिघ्नं गुळिकयुतमसुं प्राहुरिन्दुं वसुघ्नं
मान्द्याढ्यं चापि देहं मुनिहतगुळिकं भानुयुक्तं च मृत्युम् ।

प्राणाधिक्ये तु रोगः शमनमथ रुजां देहवृद्धौ प्रवृद्धे
मृत्यौ स्यात्तेषु मृत्युर्जनिभमुपगते सार्पपौष्णेन्द्रभे वा ॥ ७९ ॥

प्राणमृत्युशरीरेषु देहाधिक्ये रुजां शमः ।
प्राणाधिके महान् रोगो मृत्युश्चेदधिको मृतिः ॥ ८० ॥

मृत्यौ ज्येष्ठाहिपौष्णस्थे जन्मभस्थे च पञ्चता ।
मृत्युः प्राणश्च देहश्च क्रमवृद्धाः शुभप्रदाः ॥ ८१ ॥

सूक्ष्मत्रिस्फुटम्

युक्ते तत्त्रितयं भवेद्यदिह भं तत्स्थेषु सूर्यादिषु
ब्रूयात्तातमुखापदं मृतिमिह प्रष्टुः समान्दावहौ ।
मान्दौ दैवविदोऽशुभानि शिखिनि प्रश्नस्य कर्तुस्तथा
दूतस्यास्य विनाशमर्कतनये प्रष्ट्रेह यः प्रेषितः ॥ ८२ ॥

**॥ इति प्रश्नानुक्रमे षष्ठोऽध्यायः ॥**

* * *

# ।। अथ सप्तमोऽध्यायः ।।

## अष्टमङ्गलफलम्

वामस्थेन फलं भूतं वर्तमानं तु मध्यतः ।
दक्षिणस्थेन भावीनि फलानि च विचिन्तयेत् ।। १ ।।

अधोमध्योर्ध्वभागेषु वपुषो दक्षिणादयः ।
युग्मसंख्यावपुर्भागे ग्रहोक्तव्याधिमादिशेत् ।। २ ।।

स्थानेषु त्रिषु चैकादिशेषे स्युर्भास्करादयः ।
ध्वजाद्या गरुडाद्याश्च पञ्चभूतानि च क्रमात् ।। ३ ।।

अर्कारजीवविच्छुक्रमन्दचन्द्राहयः क्रमात् ।
ध्वजधूमहरिश्वोक्षखरमातङ्गवायसाः ।। ४ ।।

तार्क्ष्यमार्जारसिंहश्वाह्याखुद्विपशशास्तथा ।
ध्वजसिंहौ मही दन्तिवृषौ जलमयौ मतौ ।
धूमो वह्निः खरो वायुः श्वकाकौ वियदात्मकौ ।। ५ ।।

**अष्टमङ्गलग्रहफलानि**

अभीष्टार्थागमं कीर्तिं जयं भूपतिमाननम् ।
सभाजनपदग्रामसत्कृतिं कुरुते रविः ।। ६ ।।

चोरभूपायुधाग्निभ्यो भयं स्कन्दाच्च भैरवात् ।
कलहज्वरपित्तासृक्शिरोनेत्रगदान् कुजः ।। ७ ।।

गुरुदैवतविप्राणां प्रसादजशुभागमम् ।
दुकूलहेमदन्त्यश्वसुतार्तिं कुरुते गुरुः ।। ८ ।।

श्वगोमृगादितो भीतिं विष्णुकोपं विचर्चिकाम् ।
त्वग्रोगान् सन्निपातं च कुरुते शीतरश्मिजः ।। ९ ।।

भूषणाम्बरशय्याप्तिं स्त्रीसुखं मृष्टभोजनम् ।
कृषिगोमहिषीलाभं कुरुते भृगुनन्दनः ।। १० ।।

वातशूलामयं चोरदुर्जनेभ्यो भयं शनिः ।
कुरुते मरणाद्भीतिं दुर्ग्रहाणां च पीडनम् ॥ ११ ॥

वेश्मसौख्यं मनःप्रीतिं सुहृत्स्वजनसङ्गमम् ।
जलोत्थसस्यपानान्ननार्याप्तिं पूर्णचन्द्रमाः ॥ १२ ॥

कुष्ठपामादिकान् रोगान् नेत्रपादभवानपि ।
विषभीतिं च नीचानां विरोधं कुरुते फणी ॥ १३ ॥

अष्टमङ्गलयोनिफलानि

आरोग्यमर्थलाभं च लभते शत्रुनाशनम् ।
पुत्रलाभं च नियमाद् ध्वजसन्दर्शनान्नरः ॥ १४ ॥

चित्तदुःखं महाव्याधिं शत्रुपीडां निरर्थताम् ।
स्थानभ्रंशं विवादं च लभते धूमदर्शनात् ॥ १५ ॥

नीरोगत्वं सुतप्राप्तिं मनःप्रीतिं धनागमम् ।
द्विजभूपालसम्मानं लभते सिंहदर्शनात् ॥ १६ ॥

विप्रवासं भयं चैव द्रव्यनाशं रुजं तथा ।
अपमृत्युं विवादं च निर्दिशेच्छ्वप्रदर्शनात् ॥ १७ ॥

स्त्रीलाभं पुत्रलाभं च धनलाभं गृहं सुखम् ।
लभते चायुरारोग्यं वृषसन्दर्शनान्नरः ॥ १८ ॥

द्विषदागमनं रोगं स्थाननाशं धनक्षयम् ।
कार्यहानिं मनःक्लेशं लभते खरदर्शनात् ॥ १९ ॥

स्त्रीभोगं धनधान्याप्तिं सुहृदां सङ्गमं सुखम् ।
भूपालरत्नलाभं च कथयेद्गजदर्शनात् ॥ २० ॥

स्थानभ्रंशं सुहृन्नाशं स्थाननाशं महाभयम् ।
जीवनाशमरेर्मृत्युं लभते काकदर्शनात् ॥ २१ ॥

जन्तुफलानि

सर्पादयः क्रमान्मध्ये चत्वारो दक्षिणे पुनः ।
तार्क्ष्यादयश्च चत्वारो यदि ते मरणप्रदाः ॥ २२ ॥

एवं क्रमात् स्थितेष्वेषु मार्जारस्याखुभक्षणम् ।
चकोरश्येनपूर्वाणामुरगग्रहणं तथा ॥ २३ ॥

शशस्य ग्रहणं मांसखण्डं वादाय चागमः ।
कुक्कुरस्य गृहे प्रष्टुरेतन्मरणलक्षणम् ॥ २४ ॥

## मध्यस्थानस्थितजन्तुफलम्

ओतौ मध्यस्थिते वाच्यं प्रष्टुस्तल्लङ्घनादिकम् ।
सारमेये ततो भीतिर्व्याघ्रादिभ्योऽथवा भयम् ॥ २५ ॥

मूषिके मूषिकैर्वस्त्रशयनादिनिकृन्तनम् ।
वायसे वायसस्पर्शः शकृत्पातोऽस्य वा तनौ ॥ २६ ॥

खरे चतुष्पदाद्भीतिर्धूमे तु भयमग्निजम् ।
एतत्तु सकलं प्रष्टू रोगाद्यशुभसूचकम् ॥ २७ ॥

एकस्य यदि वैर्यन्यो मध्यदक्षिणसंस्थयोः ।
खेटयोरुभयत्रापि पापौ चेच्चाशुभं वदेत् ।
सुहृदावुभयत्रापि पापावपि शुभप्रदौ ॥ २८ ॥

## अष्टमङ्गले पञ्चभूतफलम्

भूतेषु शुभदा पृथ्वी तथैवापः प्रकीर्तिताः ।
वह्निर्वायुस्तथाकाशस्त्रयोऽमी चाशुभप्रदाः ॥ २९ ॥

एकत्र स्यादग्निः परत्र तोयं च मध्यदक्षिणयोः ।
यदि तर्हि विनिर्देश्यं प्रष्टू रोगोऽथवा मरणम् ॥ ३० ॥

## गणितम्

एकस्थानदशस्थानशतस्थानतया पुनः ।
स्थानत्रयं प्रकल्पातो नीलभक्तावशेषतः ॥ ३१ ॥

शुक्लप्रतिपदाद्याः स्युस्तिथयः सारशेषतः ।
तारा वाराः सप्तशेषात् प्रियशेषात्तु राशयः ॥ ३२ ॥

नवभक्तावशेषात्तु विज्ञेयाः स्युर्नवग्रहाः ।
तथैव पञ्चभूतानि पञ्चभक्तावशेषतः ॥ ३३ ॥

प्रष्टृष्टमो भवेद्राशिः प्रष्टृनिष्टाश्च तारकाः ।
यदि चेदिह वक्तव्यं पृच्छकस्याशुभं ध्रुवम् ॥ ३४ ॥

एभिस्तिथ्यादिभिर्योगा मृत्युदग्धादयो यदि ।
प्रष्टुर्विपत्तिरादेश्या सुधायोगादयः शुभाः ॥ ३५ ॥

स्थानत्रयेऽपि युग्माः स्युर्यदि संख्या मृतिर्भवेत् ।
वाममध्यमयोर्युग्मा यदि स्यान्महती रुजा ॥ ३६ ॥

संख्यां मध्यगतां हत्वा शुभेन विभजेद्द्विनैः ।
निश्शेषे मरणं प्रष्टुर्द्विशेषे सुतपश्चता ॥ ३७ ॥

स्वजनापच्चतुःशेषे षट्शेषे पृच्छकामयः ।
ओजसंख्यासु शिष्टासु सुखारोग्यादिसम्भवः ॥ ३८ ॥

न्यस्य स्थानत्रयं द्वाभ्यां वामस्थं मध्यगं त्रिभिः ।
चतुर्भिर्दक्षिणं स्थानं हत्वा पक्षः सितो यदि ॥ ३९ ॥

चलाङ्गं दैवतं कृष्णे पक्षे क्षिप्त्वा हरेद्भुजैः ।
फलराशिगते जीवे शिष्टं प्रियनगैर्नतैः ।
हत्वा वेदाप्तराश्यादिगते च रविजे मृतिः ॥ ४० ॥

अष्टमङ्गलमित्युक्तं संक्षेपेण गुरूदितम् ।
गुरुभक्त्येश्वरं ध्यायन् वदेत्सत्यं भवेद्ध्रुवम् ॥ ४१ ॥

**॥ इति प्रश्नानुक्रमे सप्तमोऽध्यायः ॥**

* * *

## ।। अथ अष्टमोऽध्यायः ।।

## आरूढोदयेन्दूद्भवम्

### आरूढविषयः

आरूढोदयलग्नांशच्छत्रस्पृष्टाङ्गराशयः ।
चन्द्राधिष्ठितराशिश्च चिन्त्याः षट् प्रश्नकर्मणि ।। १ ।।

एषां सदसद्योगादारोग्यसरोगतादि शुभमशुभम् ।
अशुभशुभावस्थाया बलवत्वात्प्रष्टुरुक्तमिति शास्त्रे ।। २ ।।

यदङ्गराशिः संस्पृष्ट आरूढ उदितोऽथवा ।
तस्मिन् पापयुते ब्रूयात्तदङ्गे रुग्व्रणादिकम् ।। ३ ।।

आरूढोदयपेन्द्वर्का अपि तद्युक्तराशिपाः ।
तुङ्गांशे बलवन्तश्चेत्पूर्णावस्थां तु पृच्छताम् ।। ४ ।।

एते बलविहीनाश्चेद्रिक्तां च कथयेद्दशाम् ।
नीचार्यंशगतास्ते चेदनिष्टफलदा दशा ।। ५ ।।

आरूढेशे बलविरहिते रन्ध्रपे वीर्ययुक्ते
तस्मिन् काले विपदतितरां जायते पृच्छकस्य ।
आरूढेशः शुभपतिरपि प्राप्तवीर्यौ विवीर्या
यत्रार्यायुर्व्ययभपतयः सर्वभाग्यागमोऽत्र ।। ६ ।।

### ग्रहावस्थानिरूपणम्

अवस्थासप्तकद्वन्द्वं ग्रहाणामस्ति तत्समा ।
भवेच्च पृच्छकावस्था प्रोक्तं ग्रन्थान्तरे तथा ।। ७ ।।

समबन्धुनिजर्क्षस्वत्रिकोणोच्चारिनीचभे ।
सप्तावस्था ग्रहाणां स्युरतिबाल्यादयः क्रमात् ।। ८ ।।

अतिबालश्च बालश्च कुमारो युवभूमिपौ ।
वृद्धो मृत इति स्थानभेदतः क्रमशो दशाः ।। ९ ।।

सूर्यादुदितमात्रो यः सोऽतिबालो भवेद्ग्रहः ।
दिनानि सप्त बालः स्यात्कुमारः स्यादतः परम् ॥ १० ॥

युवा वक्रसमारम्भे वक्रगत्यां महीपतिः ।
आसन्नास्तमयो वृद्धः सूर्यलुप्तकरो मृतः ॥ ११ ॥

एवं द्विधा ग्रहावस्था प्रोक्ता वाच्या तु पृच्छताम् ।
आरूढलग्नच्छत्राणामीशेषु बलिनो दशा ॥ १२ ॥

अतिबालादिकानां ये स्वभावाः प्रथिता इह ।
यूनः स्त्रीसक्ततेत्याद्यास्त एवेह दशा मताः ॥ १३ ॥

**आरूढराशिवशेन रोगविशेषाः**

सिंहे कुक्ष्यक्षिजो व्याधिरात्मपीडोष्णरुक् तथा ।
वक्षोजिह्वास्यरोगोऽरुच्यम्बुरोगास्तु कर्कटे ॥ १४ ॥

शिरोनेत्रभवव्याधिज्वरव्रणविचर्चिकाः ।
भौमभे बुधभे वायुरोधनासात्वगामयाः ॥ १५ ॥

आरूढे जीवभे बुद्धिभ्रमकर्णामयादयः ।
शुक्रभे व्यञ्जनोत्थारुगरुचिश्चाम्बुजो गदः ॥ १६ ॥

बुद्धिभ्रमोऽङ्गसादश्च मलयानहतिः शनेः ॥ १/२ ॥

विचर्चिकां च कण्डूर्तिं ब्रूयात्सर्पान्वितेक्षिते ।
आरूढे पापसंयुक्ते नियमेन वदेदिदम् ॥ १७ ॥

आरूढलग्नभांशानां मान्दिराशिनवांशयोः ।
योगो रोगप्रदस्तत्र बहुयोगो मृतिप्रदः ॥ १८ ॥

आरूढे वा विलग्ने वा गण्डान्तांशः सपापदृक् ।
उदेति चेद्भवेन्मृत्युरारूढाष्टमभे तथा ॥ १९ ॥

आरूढे मीनभे प्रष्टा पङ्गुः स्यात्पापवीक्षिते ।
कूपादौ पतनं वाच्यमारूढेऽलिनि वेन्दुभे ॥ २० ॥

प्राच्यादीत्युक्तवद्राशीन् आरूढादीन् न्यसेत् क्षितौ ।
वृक्षादीन् निर्दिशेत् स्वोक्तान् केन्द्रगैश्च बलान्वितैः ॥ २१ ॥

गिरितरुकदलीकण्टकिवेणूनां क्रमुकनारिकेलानाम् ।
तालानां च वनानि क्रमशोऽर्कात्स्वामिवत्तु राशीनाम् ॥ २२ ॥

अन्तःसारान् जनयति रविर्दुर्भगान् सूर्यसूनुः
क्षीरोपेतांस्तुहिनकिरणः कण्टकाढ्यांश्च भौमः ।
वागीशज्ञौ सफलविफलौ पुष्पवृक्षांस्तु शुक्रः
स्निग्धानिन्दुः कटुकविटपान् भूमिपुत्रश्च भूयः ॥ २३ ॥

**ऊर्ध्वमुखराशेः प्रशंसा**

आरूढस्योर्ध्ववक्त्रत्वं प्रष्टुरभ्युदयवृद्धिकृत् ।
आधोमुख्यं क्षयाय स्यात्तत् कृष्णीयादिषूदितम् ॥ २४ ॥

ऊर्ध्वमुखो यदि राशिर्होराप्रश्ने नरस्य सिद्धिकरी ।
अन्ये विफले ज्ञेये शुभयुतदृष्टे शुभाख्ये च ॥ २५ ॥

ऊर्ध्वास्ये तनुगे प्रसूतगतकार्यारम्भिणां पृच्छता-
मौन्नत्यं महदर्थपौरुषयशःस्थानादिकानां भवेत् ।
यद्यारूढमधोमुखं भमखिलैर्ह्रीयेत वित्तादिभि-
स्त्यज्येतापि सुहृज्जनैरपि पतेद्वाहादितः पृच्छकः ॥ २६ ॥

आरूढाधिपतिः शुभग्रहगृहे प्रश्ने यदि स्यात् स्थितः
क्षोणीशामरमन्दिरादिषु मनोज्ञेषु स्थितिः पृच्छताम् ।
पापक्षेत्रगतः स चेदिह भवेन्म्लेच्छप्रदेशे स्थितिः
सौम्यासौम्यदृगन्वयात् सदसतां योगश्च तत्रोह्यताम् ॥ २७ ॥

शुभवर्गे लग्नगते लग्ने वा सौम्ययोगमायाते ।
ब्रूयादभिमतसिद्धिं प्रष्टुः स्थानान्तरप्राप्तिम् ॥ २८ ॥

द्विपदे चतुष्पदे वा भवने लग्नोपगो ग्रहः पापः ।
तिष्ठति तन्नाशकरो ज्ञेयः सौम्योऽपि वृद्धिकरः ॥ २९ ॥

पृष्ठोदयेषु सिद्ध्यत्यशुभं मूर्धोदयेषु शुभमुक्तम् ।
उभयोदये विमिश्रं ग्रहरहितेभ्यः फलं वाच्यम् ॥ ३० ॥

**सुवर्णचिन्तनम्**

जलगन्धार्तवव्रीहितण्डुला भूतपञ्चकम् ।
तन्मयं हि वपुर्ज्ञेयं जीव एव हि काञ्चनम् ॥ ३१ ॥

पुष्पाक्षतोपरि स्वर्णमुत्थानं पृच्छकायुषे ।
तिर्यङ्मृत्युकरं भूस्थं न्यक्तु बाधागदावहम् ॥ ३२ ॥

ऊर्ध्वं पुष्पाक्षतानां निहितमिह भवेत्स्वर्णमूर्ध्वाननं चेत्
तत्काले वर्धनं स्याद्धनसुखयशसां पृच्छकस्योर्ध्वमूर्ध्वम् ।
तत्तत्राधोमुखं चेत् क्षय उपचयतः किञ्चिदारब्ध एवा-
योर्ध्वास्यं चेदधस्तात् क्षयत उपचयारम्भणं तत्र वाच्यम् ॥ ३३ ॥

सर्वाधोऽधोमुखं चेत् क्षय इह तु पुनश्चापि सर्वक्षयः स्या-
न्मध्यस्थे हेम्नि चोह्यं फलमपि सकलं प्रोक्तयैवात्र रीत्या ।
दीर्घायुर्मृत्युनैस्वे उपचितधनता प्राग्दिगादिप्लवत्वे
स्वर्णस्याग्न्यादिकोणप्लवन इह पुनर्मृत्युरोगाद्यनर्थाः ॥ ३४ ॥

**सुवर्णारूढराशेः नवांशशोधनक्रमः**

कलशमधः शिवकोणान्निशि चरतः सिन्धुकायमुपरिगतम् ।
वेदान्तादनलाद्यं मारुतकोणात् परेषु तिर्यक्त्वम् ॥ ३५ ॥

वीणामेषमृगेन्द्रभेषु गणनं कृत्वा गिरीशादधः
क्रव्यादाद्धयकुम्भतौलिषु नवांशोर्ध्वक्रमादीप्सितम् ।
कन्याकर्कटवृश्चिकेषु तिर्यग् वह्न्यादितः पूर्ववत्
वायोर्नक्रवृषान्त्यभेषु मतिमान् स्वर्णांशकं कल्पयेत् ॥ ३६ ॥

स्वर्णस्योत्तरदिक्प्लुवं सुखकरं दाक्षिण्यदिङ्मृत्युदं
पूर्वे सन्ततिलाभमत्र वरुणे रोगाद्यनर्थं वदेत् ।
अग्नौ पाचकपीडनं च सततं ईशान्यदिक् प्रोषणं
नैर्ऋत्यां मतिविभ्रमं च पवने मृत्युप्रदं स्यान्नृणाम् ॥ ३७ ॥

प्लवेन भूतं सकलं विधेयं स्वर्णस्य चांशेन च वर्तमानम् ।
भाव्यं फलं तत्स्थितिना विधेयं त्रिधा सुवर्णस्य च लक्षणं स्यात् ॥ ३८ ॥

**स्वर्णनवांशचिन्तनम्**

स्वर्णांशके पापसमन्विते वा पापान्तरस्थे यदि पापराशौ ।
चोरादिपीडां कलहं स्वनाशं दैर्घ्यं रुजां मृत्युभयं च कुर्यात् ॥ ३९ ॥

खरग्रहाधिष्ठितराशिसंस्थः स्वर्णांशको दीर्घरुजां करोति ।
शुभग्रहाधिष्ठितराशिसंस्थः स्वर्णांशकः क्षिप्रमरोगतां च ॥ ४० ॥

स्वर्णांशे रविभे स्वगेहपतनं चाग्नेर्भयं चन्द्रभे
वृद्धिः स्यादिह गोर्धराजभगते वैरं रिपूणामपि ।
जूत्याद्युष्णरुजोऽथ चान्द्रिभवने जीवस्य सौख्यं गुरो-
रायुर्वीर्यमरोगतात्र भृगुभे मन्दस्य भे हृद्रुजा ॥ ४१ ॥

आरूढभात् केन्द्रगते बलाढ्ये दिवाकरे स्वर्णनवांशनाथे ।
नृपप्रसादं धनलाभसौख्यं चतुष्पदां लाभमुपैति शीघ्रम् ॥ ४२ ॥

निशापतौ स्वर्णनवांशनाथे केन्द्रस्थिते पूर्णबलोपयाते ।
सत्कीर्तिसौख्यं नृपमाननाद्यं गोवाजिनां लाभमुपैति नूनम् ॥ ४३ ॥

स्वर्णांशेशे भूमिजे वा विलग्नात् पापोपेतेऽनिष्टगे वा बलोने ।
भूमेर्वादं शत्रुवृद्धिं समेति रोगं प्रष्टा व्यत्यये व्यत्ययं च ॥ ४४ ॥

निशीथिनीनाथसुते बलिष्ठे स्वर्णांशनाथे यदि केन्द्रकोणे ।
आयुर्बलं बन्धुगुणाभिवृद्धिं विद्याविवादादिजयं समेति ॥ ४५ ॥

स्वर्णांशनाथो यदि देवमन्त्री बलान्वितः कण्टककोणगो वा ।
पुत्रार्थलाभं धनधान्यवृद्धिं प्रष्टा सुखं याति सुदीर्घमायुः ॥ ४६ ॥

स्वर्णांशेशेऽत्र सुस्थे यदि भृगुतनये केन्द्रगे वा बलाढ्ये
स्वोच्चांशे स्वोच्चराशौ शुभखगसहिते लग्ननाथस्य केन्द्रे ।
प्रष्टुर्देहस्य सौख्यं निखिलगुणगणैर्दीर्घमायुश्च वाच्यं
गोवाजीभादिलाभं यदि तु फलमतो व्यत्यये व्यत्ययः स्यात् ॥ ४७ ॥

कण्टककोणगते रविपुत्रे स्वर्णनवांशकपे बलयुक्ते ।
प्रेष्यजनाद्धनलाभमुपेयाद्गोकृषिधान्यगुणं रिपुनाशम् ॥ ४८ ॥

स्वर्णस्यांशे हि मेषे भवति यदि नृणां द्रव्यनाशं विवादं
शत्रोः पीडां रुजं वा निगदतु वृषभे गोमहिष्यादिलाभम् ।
युग्मे स्त्रीणां नृणां वा कलहपरिभवं भ्रातृरोगं विवादं
प्रोक्तं कृष्यादिलाभं मरिचमुखधनं बन्धुवैरं क्रमेण ॥ ४९ ॥

स्वर्णस्यांशे कुळीरे भवति यदि सतां वाग्विरोधश्च जातो
भूयः सिंहं गतेऽस्मिन् वनमृगजनिता भीतिरेतद्विनाशः ।
पार्थोनांशे क्रियार्थं तरणितरणतस्त्रासजाता च बाधा
चूके वाणिज्यकृष्यादिभिरिह विभवान् भूमिवादं समीयात् ॥ ५० ॥

कीटे कीटभयं महोरगभयं श्वभ्रान्विते मन्दिरे
चापे राजभयं वृथैव कलहं रोगं सुवर्णक्षयम् ।
नक्रे नक्रभयं तथान्यजलजन्तूपद्रवं वा घटे
हृद्रोगं त्वगरुचिं विचर्चिमथवा नीचैर्विरोधं वदेत् ॥ ५१ ॥

मीने मीनविषं जलोद्भवरुजं कृष्यर्थसिद्धिं वदेत्
सञ्चिन्त्याथ नवांशकाधिपबलं वक्तव्यमेवं बुधैः ।
यत् प्रोक्तं प्रतिराशिहेमनवभागांशेषु चैवं फलं
तद्राशेश्च निरूप्य वीर्यमथवा हेमस्थितेश्च क्रमम् ॥ ५२ ॥

उदयलग्नफलम्

क्षीणेन्द्वर्कसुतारतीक्ष्णमहसां वर्गा विलग्नस्थिता
मृत्युव्याधिधनक्षयाद्यशुभदाः प्रष्टुर्यदीमे विदः ।
धीसामर्थ्यकृतोऽथ पूर्णशशिनः शुक्रस्य वा वाक्पते-
रेते कुर्युररोगतार्थतनयप्राप्त्याद्यभीष्टागमान् ॥ ५३ ॥

लग्नेशोऽशुभसंयुतो यदि नृभे प्रष्टुर्विपत्तिर्नृभिः
पश्वाद्यैश्चतुरङ्घ्रिभेषु यदि चेत् तद्भेदतो निर्दिशेत् ।
सर्पाद्यैस्तु सरीसृपाख्यभवने यद्यम्बुराशौ नदी-
कूपादौ पतनं झषादिजलजन्तूपद्रवो वा यदि ॥ ५४ ॥

यद्राशिसंज्ञो लग्नांशः स राशिश्चेच्छुभान्वितः ।
गतकालः शुभः प्रष्टुरशुभो यदि पापयुक् ॥ ५५ ॥

लग्नांशराशिगे चन्द्रे लोहपात्रक्षतिर्मृतेः ।
लक्ष्ममान्द्यंशराशिस्थे तथा मृद्भाण्डभञ्जनम् ॥ ५६ ॥

## चन्द्रफलम्

यद्राशिसंज्ञश्चन्द्राशः स राशिश्चेच्छुभान्वितः ।
भावी कालः शुभो वाच्यः पापयुक् चेदशोभनः ॥ ५७ ॥

जीवः सुतप्रदो विप्रवैरकृन्नीचभांशकः ।
शुक्रो वस्त्राङ्गनादायी विवादे जयकृद्बुधः ॥ ५८ ॥

पूर्णचन्द्रो मनोहारिद्रव्यलाभं प्रयच्छति ।
देवभूमिपयोः कोपं कुर्यादर्कोऽथ भूमिजः ॥ ५९ ॥

वृथैव विग्रहं भूमिविवादं च समावहेत् ।
सूर्यपुत्रः कृषिप्रेष्यपश्वादीनां विनाशकृत् ॥ ६० ॥

चण्डालापच्छिरोरोगविषसर्पभयं फणी ।
प्रेतबाधां शिखी कुर्यान्मान्दिश्चूर्णाद्युपद्रवम् ॥ ६१ ॥

बुधः पापयुतश्चेत् स विवादे परिभूतिकृत् ।
क्षीणचन्द्रो मनःपीडां करोति परिपृच्छताम् ।
कालः प्रोक्तांशमासोऽत्र लग्नांशेऽपि विधिस्त्वयम् ॥ ६२ ॥

प्रश्नकालसुधाभानुक्रियाणां सदृशं फलम् ।
प्रष्टुर्वक्तव्यमित्युक्तं जीवेनैतद्विलिख्यते ॥ ६३ ॥

क्रमाच्चन्द्रक्रियाः पञ्च पञ्च मेषादिराशिषु ।
प्रकल्प्य तत्समं ब्रूयात् सर्वकार्येषु तत्फलम् ॥ ६४ ॥

इन्दोर्लिप्ताः खाकाशेभैर्हृत्वा शिष्टास्तिथ्यगन्यङ्कैः ।
हत्वा खाभ्रश्रोत्रैर्लब्धाः कर्मावस्थावेला ज्ञेयाः ॥ ६५ ॥

# चन्द्रस्य क्रियाकर्मणोः फलानि

1. स्थानाद्भ्रष्टः
2. तपस्वी
3. परयुवतिरतः
4. तस्करः
5. हस्तिमुख्यारूढः
6. सिंहासनस्थः
7. नरपतिः
8. अरिहा
9. दण्डनेता
10. गुणी च
11. निष्प्राणः
12. छिन्नमूर्धा
13. क्षतकरचरणः
14. बन्धनस्थः
15. विनष्टः
16. राजा
17. वेदानधीते
18. स्वपिति
19. सुचरितं संस्मरन्
20. धर्मकर्ता
21. सद्वंशः
22. निधिसङ्गतः
23. श्रिततुलः (श्रुतकुलः)
24. व्याख्यापरः
25. शत्रुहा
26. रोगी
27. शत्रुजितः
28. स्वदेशचलितः
29. भृत्यः
30. विनष्टार्थकः
31. आस्थानी च
32. समन्त्रकः
33. परमहीभर्ता
34. सभार्यः
35. गजत्रस्तः
36. संयुतभीतिमान्
37. अतिभयः
38. लीनः
39. अन्नदाता
40. अग्निगः
41. क्षुद्बाधासहितः
42. अन्नमत्ति
43. विचरन्
44. मांसाशनः
45. अस्त्रक्षतः
46. सोद्वाहः
47. धृतकन्दुकः
48. विहरति द्यूतैः
49. नृपः
50. दुःखितः
51. शय्यास्थः
52. रिपुसेवितश्च
53. ससुहृत्
54. ध्यानी च
55. भार्यान्वितः
56. मृष्टाशी च
57. पयः पिबन्
58. सुकृतकृत्
59. स्वस्थः
60. तथास्ते सुखम् ॥

## अवस्थायाः फलानि

1. आत्मस्थानात् प्रवासः
2. महितनृपपदासक्तता
3. प्राणहानिः
4. भूपालत्वम्
5. स्ववंशोचितगुणनिरतिः
6. रोगः
7. आस्थानकत्वम्
8. भीतिः
9. क्षुद्बाधितत्वम्
10. युवतिपरिणयः
11. रम्यशय्यानुसक्तिः
12. मृष्टाशित्वं च गीतम्
    इति भवनवशात्
    सद्भिरिन्दोरवस्थाः

## चन्द्रवेलाफलानि

1. मूर्धामयः
2. मुदितता
3. यजनम्
4. सुखस्थः
5. नेत्रामयः
6. सुखितता
7. वनिताविहारः
8. उग्रज्वरः
9. कनकभूषणम्
10. अश्रुमोक्षः
11. क्ष्वेलाशनम्
12. विधुवनम्
13. जठरस्य रोगः

14. क्रीडा जले
15. हसन
16. चित्रविलेखने च
17. क्रोधश्च
18. नृत्तकरणम्
19. घृतभुक्ति
20. निद्रे
21. गानक्रिया
22. दशनरुक्
23. कलहः
24. प्रयाणम्
25. उन्मत्तता च
26. सलिलाप्लवनम्
27. विरोधः
28. स्वेच्छास्थानम्
29. क्षुद्भयम्
30. शास्त्रलाभः
31. स्वैरं गोष्ठी
32. योधनम्
33. पुण्यकर्मा
34. पापाचारः
35. क्रूरकर्मा
36. प्रहर्षः

प्राज्ञैरेताश्चन्द्रवेलाः प्रदिष्टाः ॥

प्रश्नकाले गुणश्चेन्दोः शुभो यदि शुभप्रदः ।
तथा चाशुभकर्मस्थे चन्द्रे प्रश्नोऽशुभप्रदः ॥ ६६ ॥

चन्द्रस्यारिमृतिव्ययस्थितिरसन्मध्यस्थितीक्षान्वयाः
क्षीणत्वं तनुगत्वमत्र निजनीचाप्तिश्च दोषा इमे ।
पूर्णत्वं शुभमध्यवासयुतिदृग्देवेड्यकेन्द्रस्थता
स्थानं तुङ्गगृहे युतिश्च गुरुणा साङ्गे विशेषाद्गुणाः ॥ ६७ ॥

जातके च मुहूर्ते च प्रश्ने चन्द्रक्रियादयः ।
सम्यक् फलप्रदास्तस्माद्विशेषेण विचिन्तयेत् ॥ ६८ ॥

तत्कालोद्यद्राशिः प्रष्ट्रारूढश्च लग्नशब्दोक्तौ ।
कृष्णीयादिषु कथितं ताभ्यां द्वाभ्यां फलं हि वाच्यमिति ॥ ६९ ॥

भूमिष्ठं स्थिरचक्रं चरति तथाकाश एव चरचक्रम् ।
चक्रद्वितयेन फलं प्रश्नादौ पृच्छतां वाच्यम् ॥ ७० ॥

उदयारूढर्क्षाभ्यां शुभाशुभं प्रष्टुरादिशेद्यद्वत् ।
दैवविदो व्ययभाभ्यां तदायभाभ्यां तथैव दूतस्य ॥ ७१ ॥

प्रश्नः खलूदयारूढप्राधान्येन द्विधा मतः ।
भास्करोदयवेलायां सञ्चरत्यपि पृच्छके ॥ ७२ ॥

पृच्छके विद्यया युक्ते यात्रादिचरकर्मसु ।
उदयेन फलं ब्रूयादेवमादिषु दैववित् ॥ ७३ ॥

कर्मान्ते च दिनान्ते च शयिते पृच्छके निशि ।
प्रदेशे जनसम्पूर्णे मुष्टौ चान्तर्गृहस्य च || ७४ ||

विषये स्थावराणामित्यादिष्वारूढराशिना ।
चिन्त्यमत्रोभयत्रापि स्वं स्वं छत्रं तदुच्यते || ७५ ||

## छत्रराशिनिर्णयः

मार्ताण्डे वृषतोऽलितश्च चतुरो राशीनतोऽन्यांस्तथा
प्राप्तेऽजो मिथुनं क्रमेण च वृषो वीथ्योऽथ यावान् भवेत् ।
आरूढादुदयोऽथ वीथिभवनात्तावद्भवेच्छत्रभं
ग्राह्यं स्यात् स्थिरचक्र एतदद्दढे लग्नांशकश्छादकः || ७६ ||

निरन्तरोद्यतां भानां कस्याप्यस्त्युदयः सदा ।
तथाप्यारूढवाञ्छा यत्ततोऽस्यैव प्रधानता || ७७ ||

दृढादृढक्रियाप्तत्वाच्छुभाशुभफलं द्विधा ।
मनोवाक्कर्मजं तच्च त्रिविधं तद्विदोच्यते || ७८ ||

## दुरितचिन्तनम्

छत्रारूढेन्दुलग्नव्ययमृतिरिपुगाः सद्ग्रहाः पापखेटा-
स्तेषां केन्द्रत्रिकोणेष्वपि यदि कथयेद्दुष्कृतं सम्प्रवृद्धम् ।
कोपाद्देवस्य शापात् क्षितिविबुधभवाद् विद्विषां चाभिचारा-
ल्लोकाक्रोशाच्च तत्स्यादद्दढमपि दृढं चेति वेद्यं द्विधैतत् || ७९ ||

चेतोवाक्कर्मजं तद्द्विविधमपि विधोस्तत्र होरादिवर्गे
तिष्ठन् खेटः प्रदद्याद् दृढफलमदृढं भास्वतो गोचरस्थे ।
खेटे पुण्यस्य पाकः पुनरितरगते कर्मणोऽन्यस्य वेद्य-
श्चित्ताद्ये तत्त्रिके यद्विबलखरयुतं तेन दोषानुभूतिः || ८० ||

चित्ते वाचि च कर्मणि त्रिषु खरोपेतेषु तैश्च त्रिभि
र्जायन्ते दुरितानि कर्म सशुभं सासच्च चेतो वचः ।
यद्यत्र क्रियमाणकर्मसु मनःखेदाद्गिरानिष्टया
पापश्चेतसि वाक्च खं च शुभयुक् चेत्कर्म चाश्रद्धया || ८१ ||

तद्दोषस्तनयापदेऽधिकतरः पापः परं वाचि चेत्
सौम्याः कर्मणि मानसे च दुरितं वाग्दोषतो जायते ।
तद्दोषोऽधिकमर्थहाऽथ रिपुनीचर्क्षे च मौढ्ये खरा
स्तुङ्गस्वर्क्षसुहृद्गृहेष्वपि शुभा दोषे गुणे चाधिकाः ॥ ८२ ॥

**॥ इति प्रश्नानुक्रमे अष्टमोऽध्यायः ॥**

* * *

# ॥ अथ नवमोऽध्यायः ॥

## आयुः खेटवशात्

तत्कालजैर्निमित्तैः प्रष्टारूढोदयेन्दुगुळिकाद्यैः ।
आयुः प्रथमं चिन्त्यं स्वस्थातुरविषयभेदमवगम्य ॥ १ ॥

आयुः पूर्वं परीक्षेत पश्चाल्लक्षणमादिशेत् ।
अनायुषां तु मर्त्यानां लक्षणैः किं प्रयोजनम् ॥ २ ॥

**स्वस्थातुरनिर्णयः**

लग्नेशो यदि केन्द्रगः खलु बली राशौ चरे चांशके
प्रश्नः स्वस्थगतोऽथ रिःफरिपुगो लग्नाधिपश्चेत् स्थिरे ।
निर्वीर्यश्च महागदार्तविषया पृच्छाथ मिश्रः स चेत्
तोयर्द्धिक्षयवन्मुहुः प्रशमनं वृद्धिश्च वाच्ये रुजाम् ॥ ३ ॥

तुङ्गस्थिते तनुपतौ सधनः सवीर्यो जेता द्विषां खलु भवेत्प्रथमानतेजाः ।
प्रष्टाभिमानसहितोऽथ निजत्रिकोणे वासोविभूषणलसत्तनुराप्तसौख्यः ॥ ४ ॥

बन्धोर्गृहे निजगृहे च विनष्टवैरी भार्यातनूजधनबन्धुभिरिद्धमोदः ।
वैर्यृक्षगे रुगनिशं सुतमित्रभार्यानाशश्च भूमिपतिपावकचोरपीडा ॥ ५ ॥

नीचस्थिते रिपुनिपीडनतोऽन्यदेशयानं पदाच्च चलनं धनहानिदैन्ये ।
मूढे सपापगुळिके च नृपारिहेतोर्वैकल्यवानितरदेशगतो मृतो वा ॥ ६ ॥

लग्नेशोऽष्टमपश्च नीचगृहगौ यद्वास्तगौ चेदुभौ
प्रष्टा भग्नमनाः सुखेन रहितः पीडार्तदेहः सदा ।
स्वल्पायुश्चलितः पदादपि निजादूर्ध्वाङ्गरोगार्दितो
योगेष्वप्यशुभेषु सत्सु कथयेत्केमद्रुमाद्येष्विदम् ॥ ७ ॥

लग्नाधिपश्च मृतिपश्च मिथः समेतौ यद्वा स्वतुङ्गनिजगेहसुहृद्गृहस्थौ ।
लग्नेशशुक्रधिषणाश्च धनत्रिकोणकेन्द्रस्थिता विदधते खलु दीर्घमायुः ॥ ८ ॥

लग्नं विलग्नपतिमृत्युतदीशचन्द्राः प्रष्टायुषोऽवगमने खलु साधनानि ।
तेषां शुभाशुभदृगन्वयवीर्यवत्ता निर्वीर्यतादिगुणदोषवशाद्विचिन्त्यम् ॥ ९ ॥

लग्नपस्य गुणा दोषास्तुल्याः स्युर्मृतिपस्य च ।
केन्द्रस्थितिर्मृतीशस्य दोषो लग्नपतेर्गुणः ॥ १० ॥

द्रेक्काणाः फणिभूषणा मृतिकराः कोलाभगृध्राननाः
सक्रूरा यदि शीतगौ निधनगे हीनस्य च व्याधिना ।
रन्ध्रे शीतकरो भवेन्मृतिकरः पृष्ठोदयो लग्नगः
पापाः केन्द्रमृतिस्थिताश्च मृतिदा रोगार्दितानां नृणाम् ॥ ११ ॥

लग्नं देहोऽष्टमो जीवस्तयोरधिपयोर्बलम् ।
अन्योन्यदृष्टियोगौ च दीर्घाय प्रष्टुरायुषे ॥ १२ ॥

लग्नाधिपश्च जीवश्च शुक्रश्चारूढकेन्द्रगः ।
एकैकोऽप्यायुषे प्रष्टुः किमु द्वौ किं पुनस्त्रयः ॥ १३ ॥

अन्योन्यकेन्द्रगेष्वेषु दीर्घमायुरितीतरे ॥ १/२ ॥

सौम्यास्त्रिकोणधनकेन्द्रभवाष्टमस्था दीर्घायुषे सहजषड्भवगाश्च पापाः ।
अन्यत्रगा मरणरोगकराश्च ते स्युर्मान्दिर्मृतौ मृतिकरोऽपि गुणेषु सत्सु ॥ १४ ॥

सर्वेषामपि पापानां मान्दिर्दोषप्रदोऽधिकः ।
सोऽतिदोषकरो योगदृग्वर्गवशतः शनेः ॥ १५ ॥

**जातकवशादायुषश्चिन्तनम्**

ग्रहचारदशाप्रश्नफलसंवादसम्भवे ।
सत्येव फलमादेश्यं शुभाशुभमसंशयम् ॥ १६ ॥

योगायुश्च दशायुश्चेत्यायुर्वै द्विविधं नृणाम् ।
योगोक्तमायुर्योगायुर्दशायुश्च दशाकृतम् ॥ १७ ॥

योगायुः षड्विधं योगैः षड्विधैस्तान् वदाम्यथ ।
सद्योऽरिष्टा अरिष्टाख्या योगारिष्टाह्वयास्तथा ॥ १८ ॥

मध्यदीर्घामितायुर्दा इति योगास्तु षड्विधाः ।
सद्योऽरिष्टाह्वया योगा वत्सरान्तर्मृतिप्रदाः ॥ १९ ॥

रव्यब्दान्तररिष्टाख्या नापेक्षन्ते दशामिमे ।
योगारिष्टाह्वया द्व्यष्टिवत्सरान्तर्मृतिप्रदाः ॥ २० ॥

अब्दानां सप्ततेरन्तर्योगा ये मध्यमायुषः ।
दीर्घायुषः शतस्यान्तर्दशापेक्षान्वितास्त्रयः ॥ २१ ॥

शताधिकसमा जीवेद्योगे जातोऽमितायुषि ।
आयुर्दायविधिं योगा नापेक्षन्तेऽमितायुषः ।
एते योगास्तु विज्ञेयाः सारावल्यादिशास्त्रतः ॥ २२ ॥

त्रिविधं च पुनस्त्वायुर्दीर्घमध्याल्पतावशात् ।
लग्नजन्मपयोः शत्रू निजाष्टमपती यदि ।
समौ वा यदि वा बन्धू स्वल्पमध्यचिरायुषः ॥ २३ ॥

चन्द्रांशेशस्य तद्भूषानवांशेशोऽथवा रवेः ।
लग्नेशो वापि यद्येवं स्वल्पमध्यचिरायुषः ॥ २४ ॥

**॥ इति प्रश्नानुक्रमे नवमोऽध्यायः ॥**

* * *

# ।। अथ दशमोऽध्यायः ।।

**मरणचिन्तनम् - जातकवशात्**

योगेषु सत्सु योगोक्तवत्सरान्ते मृतिर्भवेत् ।
दशापेक्षान्विते योगे तत्संवादोऽपि चिन्त्यताम् ।। १ ।।

दशापहारचारेषु ग्रहाणां दोषदायिषु ।
मरणं निर्दिशेन्नृणां योगाभावे त्वयं विधिः ।। २ ।।

**मृत्युप्रदाः दशापहाराः**

लग्नाद्वा यदि जन्मतो मृतिपती मृत्युस्थतद्वीक्षकौ
मन्दः क्रूरदृगाणपो गुळिकपस्तैर्युक्तराश्यंशपाः ।
राहुश्चैषु सुदुर्बलो जनुषि यो भावेऽनभीष्टे स्थितः
पापालोकितसंयुतोऽस्य हि दशा वान्तर्दशा मृत्युदा ।। ३ ।।

पापानां चेद्दशायामपहृतिरसतां चिन्तनीयोऽत्र मृत्यु
र्गोमासर्क्षेश्वराणामपि निजजनिभाद्दोषदः पाककालः ।
द्वित्रादीनां दशानां युगपदवसितिर्यत्र कालः सकष्टः
सर्वासां वा दशानामवसितिरशुभा दोषदानां विशेषात् ।। ४ ।।

दशा नीचस्य मूढानां नियमेन मृतिप्रदा ।। १/२ ।।

**प्रश्नवशात् मरणकालचिन्तनम्**

मान्द्यंशराशिगो मन्दो गुरुर्लग्नांशराशिगः ।
आरूढराशिगो भानुर्मान्दिराशिगतः शशी ।
एते मृतिप्रदाः प्रष्टुः संवादश्चेत्परस्परम् ।। ५ ।।

दूतवाक्यान्त्यवर्णोक्तराशिगेऽत्यन्तदोषदे ।
मन्दगुर्वर्कचन्द्रेषु मृतिस्तद्भवनोदये ।। ६ ।।

**चारवशात् मरणकालचिन्तनम्**

द्वादशजन्माष्टमगाः पुंसां दिननाथभौमशनिजीवाः ।
वित्तक्षयं प्रवासं रोगान् जनयन्ति मरणभीतिं वा ।। ७ ।।

चन्द्रस्तु निधनं प्राप्तः सप्तमं बुधलोहितौ ।
द्वादशं भास्करः षष्ठं भृगुपुत्रः समाश्रितः ॥ ८ ॥

तृतीयं देवमन्त्री च राहुकेतुशनैश्चराः ।
जन्मस्थाः प्राणसन्देहं कुर्वन्त्येते न संशयः ॥ ९ ॥

प्रथमे च चतुर्थे च सप्तमे चाष्टमे व्यये ।
क्रूरग्रहाः प्रदीप्यन्ते दीप्तपावकसन्निभाः ॥ १० ॥

चतुर्थे निधने चान्त्ये चन्द्रो नित्यमरिष्टकृत् ।
शुभः शशी च जन्मस्थो न स्याज्जन्मदिनं तथा ॥ ११ ॥

## जातकवशात् मरणनिमित्तरोगचिन्तनम्

क्रमेण मरणं वह्निसलिलायुधजूर्तिभिः ।
अज्ञातरोगतृट्क्षुद्भिरर्काद्यैरष्टमस्थितैः ॥ १२ ॥

दृष्टेऽष्टमे तु सूर्याद्यैस्तत्प्रोक्तास्थ्यादिजामयैः ।
मृत्युर्यद्वाथ तत्प्रोक्तपित्तवह्न्यादिसम्भवः ॥ १३ ॥

अस्थि रक्तं च मज्जा त्वग्वसा शुक्रं च वस्नसा ।
एवं हि धातवः सप्त सूर्यादीनां प्रकीर्तिताः ॥ १४ ॥

पित्तं वातकफौ पित्तं वातपित्तकफाः कफः ।
कफवातौ च वातश्च सूर्यादीनां प्रकीर्तिताः ॥ १५ ॥

ग्रहयोगेक्षणाभावे निधने निधनाधिपः ।
द्वाविंशत्र्यंशपो वापि स्वगुणैर्मरणप्रदः ॥ १६ ॥

मान्द्यारूढनवांशकामगृहगाः सौम्याः सुमृत्युप्रदाः
पापास्तत्र गतास्तु दुर्मृतिकरास्तेष्वर्क उर्वीपतेः ।
क्षीणेन्दुः सलिले युधि क्षितिसुतः सूर्यात्मजो वञ्चना-
द्राहुः पन्नगदंशनान्मरणदो यद्वा विषस्पर्शनात् ॥ १७ ॥

जूर्त्या तोयविकारतश्च पिटकाद्युष्णामयैर्वायुना
गुन्माङ्गोत्थितवेदनाभिरधिकं शोकप्रमेहक्षयैः ।

कासश्वाससमीरतो मृतिरिनादीनां शनौ त्र्यंशगे
त्र्यंशेशा यदि तेऽहिवीक्षितयुता मृत्युर्विषोत्थामयैः ॥ १८ ॥

सौम्यानामंशराशीन् गतवति रविजे स्वर्क्षतुङ्गादिगे वा
जीवर्क्षस्थे विशेषान्म्रियत इह गृहे पुत्रमित्राद्युपेतः ।
नीचारात्यालयस्थे रविभुवि रहितो बन्दुभिर्दुःखितः सन्
सर्पत्र्यंशेऽत्र तिष्ठत्यहिगुलिकसमेतेक्षिते सर्पदष्टः ॥ १९ ॥

मन्दे भौमयुतेऽथवा रवियुते क्षेत्रस्थिते चानयो-
र्भूते वह्निमये स्थितेऽगुगुलिकोपेतेक्षितेऽग्नौ मृतिः ।
एवंभूतशनौ जलग्रहयुते तत्ताम्बुपातादिभि-
र्दोषेऽसत्युदितेऽम्बुभूतखचरक्षेत्रान्विते वारिणि ॥ २० ॥

त्र्यंशे कोलमुखे स्थिते मृगगणैर्गृध्रानने पक्षिभि-
स्तत्राप्यस्तु बलोनता गुलिकयोगेक्षादिकं भास्करेः ।
नेष्टस्थानगताश्च मान्दिगृहपाः सूर्यादयो दुर्बला-
स्तातान्मातृसहोत्थबन्धुतनयस्त्रीभ्यः स्वतो मृत्युदाः ॥ २१ ॥

दौर्बल्यादियुते शनौ क्षितिभुवा युक्तेक्षिते पञ्चता
चामुण्ड्यादिनिपीडयारगुलिकोपेतेऽसिबाणादिभिः ।
मन्दे मान्दिविवस्वदीक्षितयुते कोपेन शम्भोस्तदी-
यावासाहितवासभूतकृतया जूर्त्या मृतिं निर्दिशेत् ॥ २२ ॥

**प्रश्नलग्नतः मृत्युनिमित्तरोगचिन्तनम्**

वीक्षते योऽष्टमं खेटस्तस्य रोगस्तु मृत्यवे ।
तदभावेऽष्टमस्थस्य द्वयाभावे तदीशितुः ॥ २३ ॥

अत्यग्निं वेदनामन्तर्ज्वरं चार्कोऽथ चन्द्रमाः ।
छर्दिमूर्ध्वानने तिर्यग्वक्त्रे मूत्रादिबन्धनम् ॥ २४ ॥

अतिसारं तृषं चाधोवक्त्रे शोफं तु सर्वगः ।
उष्णप्रसरणं दाहं रक्तक्षोभभवं व्रणम् ॥ २५ ॥

भूमिजोऽथ बुधः कुर्याच्छीतज्वरमतिभ्रमौ ।
सन्निपातरुजां चाथ गुरुर्बुद्धेरनार्जवम् ॥ २६ ॥

अजीर्तिं श्वयथुं चाथ दाहं मोहं च भार्गवः ।
तृष्णारुचिसमस्ताङ्गतोदांस्तरणिनन्दनः ॥ २७ ॥

वायुक्षोभमहिर्मान्दिर्हिक्कामपि सिरोद्गमम् ।
सूर्यादिगुलिकान्तानामिमे रोगाः प्रकीर्तिताः ॥ २८ ॥

मृत्युः स्याच्चरभे विदेश उभये मार्गे स्वदेशे स्थिरे
ग्राम्यारण्यजलात्मके तु निधने ग्रामे जलेऽम्बवन्तिके ।
स्वच्छम्लेच्छनतोन्नतेषु सदसत्क्षेत्राध ऊर्ध्वानने
दीपादीनपि निर्दिशेज्जननवद्धेनाष्टमेनामुना ॥ २९ ॥

## रोगविशेषचिन्तनम्

तत्तदुक्तामया वाच्या अनिष्टस्थानगैर्ग्रहैः ।
इष्टस्थितैस्तथारोग्यं तदेवाथ निगद्यते ॥ ३० ॥

पापा लाभतृतीयगाः सहजवैर्यन्त्याष्टमेभ्योऽन्यगाः
सौम्या मान्दिरपि त्रिकोणमृतिकेन्द्रेभ्योऽपरत्र स्थिताः ।
सर्वेऽमी कथयन्त्यनामयतनुं प्रष्टारमेवं स्थिता
रोगग्रस्तकलेवरं च कथितेभ्योऽन्यत्र ते संस्थिताः ॥ ३१ ॥

रोगास्तु द्विविधा ज्ञेया निजागन्तुविभेदतः
निजाश्चागन्तुकाश्चापि प्रत्येकं द्विविधाः पुनः ॥ ३२ ॥

निजाः शरीरचित्तोत्था दृष्टादृष्टनिमित्तजाः ।
तथैवागन्तुकाश्चैवं व्याधयः स्युश्चतुर्विधाः ॥ ३३ ॥

वातपित्तकफोद्भूताः पृथक्संसर्गजास्तथा ।
सन्निपातभवाश्चैते शारीराः कीर्तिता गदाः ॥ ३४ ॥

अष्टमेन तदीशेन तद्द्रष्ट्रा तद्गतेन वा ।
विज्ञातव्याः स्युरेतेषां वीर्यतस्तत्कृता गदाः ॥ ३५ ॥

क्रोधसाध्वसशोकादिवेगजातास्तु मानसाः ।
ज्ञेया रन्ध्रमनोनाथमिथोयोगेक्षणादिभिः ॥ ३६ ॥

शापाभिचारघातादिजाता दृष्टनिमित्तजाः ।
ज्ञेयाः षष्ठतदीशाभ्यां तद्द्रष्ट्रा तद्गतेन वा ॥ ३७ ॥

रन्ध्रेशषष्ठसम्बन्धे शापाद्याः प्रबलाश्च ते ।
अदृष्टहेतुजा ज्ञेया बाधकग्रहसम्भवाः ॥ ३८ ॥

## उन्मादलक्षणम्

लग्नस्थे धिषणे दिवाकरसुतो भौमोऽथवा द्यूनगो
मन्दे लग्नगते मदात्मजतपःसंस्थो महीनन्दनः ।
मूर्तौ मूढशशीन्दुजौ कृशशशी मन्दश्च रिःफस्थितौ
पापोपेतकृशामृतांशुरुदयायुःस्वान्तधर्मोपगः ॥ ३९ ॥

अस्ते पापयुतो मान्दिर्वित् त्रिषष्ठाष्टमान्त्यगः ।
उन्माददायिनो योगा एवमष्टौ प्रकीर्तिताः ॥ ४० ॥

वातोन्मादे स्नेहपानं पित्तोन्मादे विरेचनम् ।
श्लैष्मिके नस्यवमनमागन्तुष्वखिलाः क्रियाः ॥ ४१ ॥

सर्वे नश्यन्ति चोन्मादा जपहोमादिकर्मतः ॥ १/२ ॥

चन्द्रशुक्राष्टमाधीशा गोचरेतरगा यदि ।
विषमाष्ट्युपवासोत्थ उन्माद इति निर्दिशेत् ॥ ४२ ॥

केतुमान्द्यहियुक्तेषु चैतेष्वशुचिभुक्तिजः ।
सपापे पञ्चमे भीतिवैराग्योत्थः स भूमिजे ॥ ४३ ॥

क्रोधजोऽथाभिचारोत्थः षष्ठगेष्वशुभेषु सः ॥ १/२ ॥

गुर्वादिशापसम्भूतः पापे नवमसंस्थिते ।
कल्याणपञ्चगव्याज्यसेवाद्येषु विधीयताम् ॥ ४४ ॥

## अपस्मारलक्षणम्

मन्दे रन्ध्रगतेऽह्रौ च त्रिकोणे बलिनोऽशुभाः ।
योगोपस्मारदो भानुर्भौमश्च गददौ यदि ॥ ४५ ॥

शमायादावपस्मारे कूश्माण्डीं बलिमाहरेत् ॥ १/२ ॥

सुदर्शनेन जुहुयात्तिलैः क्रोधाग्निनाथवा ।
प्रत्यक्षरसहस्रेण घोरापस्मारशान्तये ॥ ४६ ॥

**रोगभेदलक्षणानि**

पापग्रहेक्षितं लग्नं रन्ध्रं रविजवीक्षितम् ।
रन्ध्रेशो विबलो योग एष भक्तविरोधकृत् ॥ ४७ ॥

लग्ने पापेक्षिते लग्ननाथे नीचारिराशिगे ।
शुक्रयुक्तेक्षितं रन्ध्रमेष योगः प्रमेहकृत् ॥ ४८ ॥

पित्तोष्णज्वरतापदेहपतनापस्मारहृत्क्रोडज-
व्याधीन् वक्ति रविर्दृगार्त्यरिभयं त्वग्दोषमस्थिस्रवम् ।
कुष्ठाग्न्यस्त्रविषार्तिदारतनयव्यापच्चतुष्पाद्भयं
चोरक्ष्मापतिधर्मदैवफणभृद्भूतेशभूताद्भयम् ॥ ४९ ॥
निद्रालस्यकफातिसारपिटकाः शीतज्वरं चन्द्रमाः
शृङ्ग्यब्जाहतिमग्निमान्द्यकृशतायोषिद्व्यथाकामिलाः ।
चेतःशान्तिमसृग्विकारमुदकाद्भिर्तिं च बालग्रहा-
दुर्गाकिन्नरधर्मदैवफणभृद्यक्षाच्च पीडां वदेत् ॥ ५० ॥

तृष्णासृक्कोपपित्तज्वरमनलविषास्त्रार्तिकुष्ठाक्षिरोगान्
गुन्मापस्मारमज्जाविहतिपरुषतापामिकादेहभङ्गान् ।
भूपारिस्तेनपीडासहजसुतसुहृद्वैरयुद्धं विधत्ते
रक्षोगन्धर्वघोरग्रहभयमवनीसूनुरूर्ध्वाङ्गरोगम् ॥ ५१ ॥

भ्रान्तिं दुर्वचनं दृगामयगलघ्राणोत्थरोगान् ज्वरं
पित्तश्लेष्मसमीरजं विषमपि त्वग्दोषपाण्ड्वामयान् ।
दुःस्वप्नं च विचर्चिकां निपतनं पारुष्यबन्धश्रमान्
गन्धर्वक्षितिहर्म्यवासिमयुभिर्ज्ञो वक्ति पीडां खगैः ॥ ५२ ॥

गुन्मान्त्रज्वरशोकमोहकफजश्रोत्रार्तिमेहामयान्
देवस्थाननिधिप्रपीडनमहीदेवेशशापोद्भवम् ।
रोगं किन्नरयक्षदेवफणभृद्विद्याधराद्युद्भवं
जीवः सूचयति स्वयं बुधगुरू कृष्णापचारोद्भवम् ॥ ५३ ॥

पाण्डुश्लेष्ममरुत्प्रकोपनयनव्यापत्तितन्द्रीश्रमान्
गुह्यास्यामयमूत्रकृच्छ्रमदनव्यापत्तिशुक्लस्रुतीः ।
वासस्त्रीकृषिदेहकान्तिविहतिं शोफामयं योगिनी-
यक्षीमातृगणाद्भयं प्रियसुहृद्भङ्गं सितः सूचयेत् ॥ ५४ ॥

वातश्लेष्मविकारपादविहतीरापत्तितन्द्रीश्रमान्
भ्रान्तिं कुक्षिरुगन्तरुष्णभृतकध्वंसं च पश्वाहतिम् ।
भार्यापुत्रविपत्तिमङ्गविहतिं हृत्तापमर्कात्मजो
वृक्षाश्मक्षतिमाह कश्मलगणैः पीडां पिशाचादिभिः ॥ ५५ ॥

स्वर्भानुस्तनुतापकुष्ठविषमव्याधीन् विषं कृत्रिमं
पादार्तिं च पिशाचपन्नगभयं भार्यातनूजापदम् ।
ब्रह्मक्षत्राविरोधशत्रुजभयं केतुस्तु संसूचयेत्
प्रेतोत्थं च गदं विषं च गुलिकः सर्पार्तिमाशौचकम् ॥ ५६ ॥

बाधां वक्ति पिशाचजां दशमगो मन्दोऽथ सर्पेक्षितो
वीक्षाघ्राणभवं विषं च गुलिको देहाष्टमस्थानगः ।
पापाः षष्ठगतास्तथोदररुजं रन्ध्रास्तगारो ज्वरं
लग्नास्तोपगतोऽप्यजीर्णजरुजं चन्द्रोऽरिपीडां रिपौ ॥ ५७ ॥

## अङ्गचिन्तनम्

कादीति कन्दृगित्याभ्यां प्रष्टुरङ्गानि चिन्तयेत् ।
पापदृष्टयुते गात्रे व्रणरोगादिकं वदेत् ॥ ५८ ॥

चरोर्ध्ववक्त्रशीर्षोदयादीनां लग्नगत्वतः ।
ककण्ठवस्तिपूर्वाङ्गग्रहणं न दृगाणतः ॥ ५९ ॥

राश्यंशयोश्चरादित्वसंवादे तु चरादिभिः ।
तदभावे न च ज्ञाते चांश ऊर्ध्वाननादिभिः ॥ ६० ॥

अत्यन्तविबलेऽर्केऽङ्गग्रहणं कोदयादिभिः ।
नीचांशस्त्रीतुलान्त्याद्यत्र्यंशेष्वर्कोऽतिदुर्बलः ॥ ६१ ॥

विलग्नादिषु काद्यङ्गविन्यासोऽथ निगद्यते ।
कृष्णीये तु यथा ग्राह्यः स एव प्रश्नकर्मणि ॥ ६२ ॥

होरोत्तमाङ्गसंस्था दक्षिणवामावनागतातीतौ ।
कर्णाक्षिनासिकापुटकपोलहनवोऽथ वक्त्रान्ताः ॥ ६३ ॥

ग्रीवांसभुजौ पार्श्वे पृष्ठे हृदयोदरे कटिश्चान्त्या ।
नाभिर्वस्तिगुदाण्डा मुष्का पूर्वादयो द्वौ द्वौ ॥ ६४ ॥

कन्दृक्श्रोत्रेति होरायां वराहमिहिरोदितः ।
योऽङ्गेषु भावविन्यासो ग्राह्य एव स जातके ॥ ६५ ॥

रोगभेदानिति ज्ञात्वा चिकित्सामुचितां वदेत् ।
तीव्रे कर्मविपाकोक्तप्रायश्चित्तं च शान्तये ॥ ६६ ॥

## प्रायश्चित्तनिरूपणम्

जन्मान्तरकृतं पापं व्याधिरूपेण जायते ।
तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥ ६७ ॥

यथा कार्येषु सामग्री दृष्टादृष्टोभयात्मिका ।
तथोक्ता रोगनाशेषु प्रायश्चित्तौषधात्मिका ॥ ६८ ॥

रोगार्तानामिह तु बहुधा कल्प्यते रोगहेतु-
र्भूतावेशाद् ग्रहगतिवशाद्वातपित्तादिकोपात् ।
एतत्तथ्यं त्रिविधमुदितं प्रायशः स्वीयपाप्मा
रोगोत्पत्तेर्भवति हि नृणां हेतुरेकस्त्रिधा स्यात् ॥ ६९ ॥

राजयक्ष्मादिरोगाणां ब्रह्महत्यादि कारणम् ।
वस्त्रदानादिकं प्रायश्चित्तं तद्दिगितीरिता ॥ ७० ॥

औषधं पथ्यमाहारं तैलाभ्यङ्गं प्रतिश्रयम् ।
रोगिभ्यः श्रद्धया दद्याद्रोगिरोगनिवृत्तये ॥ ७१ ॥

मृत्युञ्जयहवनं खलु सर्वरुजां शान्तये विधेयं स्यात् ।
सर्वेष्वपि होमेषु ब्राह्मणभुक्तिस्तथा तथाप्तवचः ॥ ७२ ॥

तीव्रज्वराभिचारादिशान्तिदं हवनं मतम् ।
मृत्युञ्जयाख्यमन्त्रेण नैव केवलमायुषे ॥ ७३ ॥

तीव्रज्वरे तीव्रतराभिचारे सोन्मादके दाहगदे च मोहे ।
तनोति शान्तिं न चिरेण होमः सञ्जीवनश्चाष्टसहस्रसंख्यः ॥ ७४ ॥

शान्तिके पौष्टिके चापि वशीकरणकर्मणि ।
हुतसंख्यासमानं स्यादुत्तमं द्विजभोजनम् ॥ ७५ ॥

**॥ इति प्रश्नानुक्रमे दशमोऽध्यायः ॥**

* * *

# ॥ अथैकादशोऽध्यायः ॥

## सञ्चिन्त्य भावान् परान्

**भावाः**

देहस्य सौष्ठवं स्वास्थ्यं स्थितिः श्रेयो यशः सुखम् ।
जयो वपुश्च तत्सर्वं चिन्तनीयं विलग्नतः ॥ १ ॥

भर्तव्यमखिलं वित्तं वाणी चक्षुश्च दक्षिणम् ।
विद्याश्च विविधा ह्येतत्सर्वं चिन्त्यं द्वितीयतः ॥ २ ॥

धैर्यं वीर्यं च दुर्बुद्धिः सहोदरपराक्रमौ ।
दक्षकर्णसहायौ च चिन्तनीयं तृतीयतः ॥ ३ ॥

माता सुहृन्मातुलभागिनेयौ क्षेत्रं सुखं वाहनमासनं च ।
लालित्यमम्भः शयनं च वृद्धिः पश्वादिकं जन्मगृहं चतुर्थात् ॥ ४ ॥

प्रज्ञा प्रतिभा मेधा विवेकशक्तिः पुरातनं पुण्यम् ।
मन्त्रामात्यतनूजाः पञ्चमभात्सौमनस्यमपि चिन्त्यम् ॥ ५ ॥

तस्करारातिविघ्नाधिव्याधयश्च तनुक्षतिः ।
मरणं वारिशस्त्रेण चिन्तनीयं हि षष्ठतः ॥ ६ ॥

विवाहमदनालोकभार्याभर्तृसमागमाः ।
शय्यास्त्रीसद्मनष्टार्थमैथुनान्यपि सप्तमात् ॥ ७ ॥

सर्वप्रणाशो विपदोऽपवादो हेतुप्रदेशौ मरणस्य दासः ।
मठादिकं वेश्म गदाश्च विघ्ना विचिन्तनीयाः पुनरष्टमेन ॥ ८ ॥

भाग्यधर्मदयापुण्यतपस्तातसुतात्मजाः ।
दानोपासनसौशील्यगुरवो नवमादमी ॥ ९ ॥

देवालयनगरसभामार्गालयदाससर्वकर्माणि ।
आज्ञालम्बनमेतत्सर्वं चिन्त्यं हि दशमेन ॥ १० ॥

सर्वाभीष्टागमो ज्येष्ठभ्राता जाता निजात्मजाः ।
वामकर्णोऽर्थलाभश्च चिन्त्या ह्येकादशेन ते ॥ ११ ॥

पापं व्ययश्च पतनं निरये वाममम्बकम् ।
स्थानभ्रंशश्च वैकल्यं द्वादशेन विचिन्तयेत् ॥ १२ ॥

चिन्त्यं चङ्क्रमणं लग्नाच्छयनं हि चतुर्थतः ।
सप्तमेनोपवेशश्च चिन्त्या दशमतः स्थितिः ॥ १३ ॥

हिबुकेनाधः सलिलं नद्यागमनं तु सप्तमेनैव ।
दशमेन वृष्टिपतनं ब्रूयादुदयेन तत्त्रितयम् ॥ १४ ॥

बाह्याभ्यन्तरभावाद् द्विविधा भावाः समीरिता ह्येते ।
बाह्याः खलु तन्वाद्या ज्ञेयाः पुनरान्तरास्तु कल्याद्याः ॥ १५ ॥

यद्यल्लग्नादिभिश्चिन्त्यं तत्तत्स्वामिसमागमे ।
आभ्यन्तरं भवेत्सर्वं विज्ञेयं बाह्यमन्यथा ॥ १६ ॥

मूर्धास्यगलस्कन्धा हृदयोदरवस्तिदेशगुह्यानि ।
ऊरू जानू जङ्घे पादौ भावाः क्रमाद्विलग्नाद्याः ॥ १७ ॥

अङ्गानां ह्रस्वदीर्घत्वं लग्नाद्याश्रितराशिभिः ।
वाच्यं तत्कथने प्राय एवेदमुपयुज्यते ॥ १८ ॥

लग्नराशिः स्वयं प्रष्टा तत्सम्बन्धिधनादयः ।
द्वितीयाद्यन्यभावास्तत्पुष्टिहानी शुभाशुभैः ॥ १९ ॥

भावचिन्तनम्

यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्याभिवृद्धिः ।
पापैरेवं तस्य भावस्य हानिर्विज्ञातव्या प्रश्नतो जन्मतो वा ॥ २० ॥

यस्मिन् यस्मिन् भावे द्विद्वादशसप्तमे स्थिताः सौम्याः ।
तस्मिन् तस्मिन् वृद्धिर्दशमचतुर्थस्थितैस्तद्वत् ॥ २१ ॥

षष्ठाष्टमरिःफेशा भावपरिपवः शुभाश्च भावहनः ।
भावतदीश्वरकारकदुर्बलता चास्ति तद्वदाप्तवचः ॥ २२ ॥

षष्ठं द्वादशमष्टमं च मुनयो भावाननिष्टान् विदु-
स्तन्नाथान्वितवीक्षिता यदधिपा ये वा च भावाः स्वयम् ।
तत्रस्थाश्च यदीश्वरास्त्रय इमे नश्यन्ति भावा नृणां
जाता वा विफला विनष्टविकलास्तत्रातिकष्टोऽष्टमः ॥ २३ ॥

भावाधीशे च भावे सति बलरहिते च ग्रहे कारकाख्ये
पापान्तःस्थे च पापैररिभिरपि समेतेक्षिते नान्यखेटैः ।
पापैस्तद्बन्धुमृत्युव्ययभवनगतैस्तत्त्रिकोणस्थितैर्वा
वाच्या तद्भावहानिः स्फुटमिह भवति द्वित्रसंवादभावात् ॥ २४ ॥

ग्रहकारकनिरूपणम्

तातश्चात्मप्रभावो द्युमणिरथ मनोमातरौ शीतरश्मि-
र्भ्राता सत्त्वं च भौमः क्षितिरपि वचनं ज्ञानमिन्दोस्तनूजः ।
धीचित्पुत्राङ्गसौख्यं सुरगुरुरबलाभोगयानानि शुक्रो
मृत्युर्व्याधिश्च दुःखं शनिरिह गदितो दासभृत्यादिकोऽपि ॥ २५ ॥

ताम्रं स्वर्णं पितृशुभफलं चात्मसौख्यप्रतापं
धैर्यं शौर्यं समितिविजयं राजसेवां प्रकाशम् ।
शैवं कार्यं वनगिरिगतिं होमकार्यप्रवृत्तिं
देवस्थानं कथयतु बुधस्तैक्ष्ण्यमुत्साहमर्कात् ॥ २६ ॥

मातुः स्वस्ति मनःप्रसादमुदधिस्नानं सितं चामरं
छत्रं सुव्यजनं फलानि मृदुलं पुष्पाणि सस्यं कृषिम् ।

कीर्तिं मौक्तिककांस्यरौप्यमधुरक्षीरादिवस्त्राम्बुगो-
योषाप्तिं सुखभोजनं तनुसुखं रूपं वदेच्चन्द्रतः ॥ २७ ॥

सत्त्वं भूफलितं सहोदरगुणं क्रौर्यं रणं साहसं
विद्वेषं च महानसाग्निकनकज्ञात्यस्त्रचोरान् रिपून् ।
उत्साहं परकामिनीरतिमसत्योक्तिं महीजाद्वदे-
द्वीर्यं चित्तसमुन्नतिं च कलुषं सेनाधिपत्यं क्षतम् ॥ २८ ॥

पाण्डित्यं सुवचः कलानिपुणतां विद्वत्स्तुतिं मातुलं
वाक्चातुर्यमुपासनादिपटुतां विद्यासु युक्तिं मतिम् ।
यज्ञं वैष्णवकर्म सत्यवचनं शुक्तिं विहारस्थलं
शिल्पं बान्धवयौवराज्यसुहृदस्तद्भागिनेयं बुधात् ॥ २९ ॥

ज्ञानं सद्गुणमात्मजं च सचिवं स्वाचारमाचार्यकं
माहात्म्यं श्रुतिशास्त्रधीस्मृतिमतिं सर्वोन्नतिं सद्गतिम् ।
देवब्राह्मणभक्तिमध्वरतपःश्रद्धाश्च कोशस्थलं
वैदुष्यं विजितेन्द्रियं धवसुखं सम्मानमीड्याद्दयाम् ॥ ३० ॥

सम्पद्वाहनवस्त्रभूषणनिधिद्रव्याणि तौर्यत्रिकं
भार्यासौख्यसुगन्धपुष्पमदनव्यापारशय्यालयान् ।
श्रीमत्त्वं कवितासुखं बहुवधूसङ्गं विलासं मदं
साचिव्यं सरसोक्तिमाह भृगुजादुद्वाहकर्मोत्सवम् ॥ ३१ ॥

आयुष्यं मरणं भयं पतिततां दुःखावमानामयान्
दारिद्र्यं भृतकापवादकलुषाण्याशौचनिन्द्यापदः ।
स्थैर्यं नीचजनाश्रयं च महिषं तन्द्रीमृणं चायसं
दासत्वं कृषिसाधनं रविसुतात्कारागृहं बन्धनम् ॥ ३२ ॥

शैवं धाम बहिःप्रकाशकमरुद्देशो रवेः पूर्वदिग्-
दुर्गास्थानवधूजलौषधिमधुस्थानं विधोर्वायुदिक् ।
चोरम्लेच्छकृशानुयुद्धभुवि दिग्याम्या कुजस्योदिता
विद्वद्विष्णुसभाविहारगणकस्थानान्युदीचीं विदुः ॥ ३३ ॥

कोशाश्वत्थसुरद्विजातिनिलयस्त्वैशानदिग्गीष्पते-
र्वेश्यावीथ्यवरोधनृत्तशयनस्थानं भृगोरग्निदिक् ।
नीचश्रेण्यशुचिस्थलं वरुणदिक्छास्तुः शनेरालयो
वल्मीकाहितमोबिलान्यहिशिखिस्थानानि दिग्रक्षसः ॥ ३४ ॥

शैवो भिषङ्नृपतिरध्वरकृत्प्रधानी व्याघ्रो मृगो दिनपतेः किल चक्रवाकः ।
शास्ताङ्गनारजककर्षकतोयगाः स्युरिन्दोः शशश्च हरिणश्च बकश्चकोरः ॥ ३५ ॥

भौमो महानसगतायुधभृत्सुवर्णकाराजकुक्कुटशिवाकपिगृध्रचोराः ।
गोपज्ञशिल्पगणकोत्तमविष्णुदासास्ताक्ष्र्यः किकीदिविशुकौ शशि ो बिडालः ॥ ३६ ॥

दैवज्ञमन्त्रिगुरुविप्रयतीशमुख्याः पारावतः सुरगुरोस्तुरगश्च हंसः ।
गानी धनी विटवणिङ्नटतन्तुवायवेश्यामयूरमहिषाश्च भृगोः शुको गौः ॥ ३७ ॥

तैलक्रयी भृतकनीचकिरातकायस्काराश्च दन्तिकरटाश्च पिकाः शनेः स्युः ।
बौद्धाहितुण्डिकखराजवृकोष्ट्रसर्पध्वान्तादयो मशकमत्कुणकृम्युलूकाः ॥ ३८ ॥

आत्मादयो गगनगैर्बलिभिर्बलवत्तराः ।
दुर्बलैर्दुर्बला ज्ञेया विपरीतं शनेः स्मृतम् ॥ ३९ ॥

अर्कांशे सौर्यां स्वं तातश्चाद्युदितसर्ववस्तूनाम् ।
कारकतार्कादीनां विज्ञेया पोषणे तथा हनने ॥ ४० ॥

भाग्याद्यभीष्टभावेशोऽप्यशुभो भावपुष्टिकृत् ।
लग्नात्पुत्रेति पद्ये तद्वराहमिहिरोदितम् ॥ ४१ ॥

शुभदानां प्राबल्ये शुभपौष्कल्यं पुनश्च दोषकृताम् ।
वैबल्ये दोषाणां पौष्कल्यं वदति तद्वदभियुक्तः ॥ ४२ ॥

पञ्चमसंस्थः पापः पुत्रविनाशं करोति बलहीनः ।
सौम्यः सुतं विधत्ते बलसहितश्चाष्टमाधिपं हित्वा ॥ ४३ ॥

येन ग्रहेण यत्प्रोक्तमशुभं वा शुभं फलम् ।
बली चेत्स शुभं पूर्णमशुभं दुर्बलो यदि ॥ ४४ ॥

भावेष्विष्टेषु वर्गोत्तमनिजरिपुभेष्वास्थितो यो ग्रहोऽसौ
पूर्णं मध्यं तथाल्पं दिशति शुभफलं स्वोदितं पृच्छकानाम् ।

भावेष्विष्टेतरेष्वप्यशुभमपि तथा पुष्टमध्याल्परूपं
वैरिस्वीयांशवर्गोत्तमगत उदितं द्रव्यनाशामयाद्यम् ॥ ४५ ॥

स्वामी कारकखेचरश्च बलिनौ यस्येष्टभावस्थितौ
सम्पूर्णानुभवक्षमश्च नियतं भावः स नृणां भवेत् ।
रिःफारातिमृतिस्थितौ च विबलौ यत्कारकाधीश्वरौ
भावोऽयं नहि सम्भवेदपि नृणां कस्यानुभूतौ कथा ॥ ४६ ॥

स्वोच्चादीष्टगृहेषु कारकपती रन्ध्राद्यनिष्टस्थितौ
यद्भावस्य स सम्भवेदविमलो नास्यानुभूतिर्नृणाम् ।
नीचाद्याश्रयतोऽबलौ शुभतरे लाभादिभावे स्थितौ
यद्भावाधिपकारकौ स विकलोऽप्यस्यानुभूतिर्भवेत् ॥ ४७ ॥

नाथकारकयोरेको बलवानिष्टभावगः ।
अन्योन्यथेति मिश्रत्वेऽप्युक्तरीत्योह्यतां फलम् ॥ ४८ ॥

भावात्तदीश्वरे सुस्थे भावसम्पन्न चान्यथा ।
लग्नादनुभवश्चैवं चिन्त्यतामिति केचन ॥ ४९ ॥

यस्य यस्य विलग्नेन सम्बन्धो लग्नपेन वा ।
दृग्योगकेन्द्रगत्याद्यैः स स भावोऽनुभूयते ॥ ५० ॥

**ग्रहाणामिष्टानिष्टभावाः**

सौम्यानां व्ययमृत्युशत्रुसहजा नेष्टा अभीष्टाः परे
पापानामभिमातिसोदरभवा इष्टा अनिष्टाः परे ।
भावेष्वेषु हि मुख्यता तु वपुषो धर्मात्मजौ तत्समौ
तेषु त्रिष्वधिकं शुभाशुभफलं विद्यात् सतां चासताम् ॥ ५१ ॥

ताम्रहेमादिवस्तूनां स्वोक्तानां लाभदा अपि ।
रुक्प्रदत्वात् तु रोगादिप्रश्नेऽनिष्टा रिपौ खराः ॥ ५२ ॥

पुष्णन्ति शुभा भावान् मूर्त्यादीन् घ्नन्ति संस्थिताः पापाः ।
सौम्याः षष्ठेऽरिघ्नाः सर्वे नेष्टा व्ययाष्टमगाः ॥ ५३ ॥

**भावानामसत्सद्योगफलानि**

पापे लग्नगते पराजयशिरोरुग्दुःखदुष्कीर्तयः
स्थानभ्रंशधनक्षयाखिलशरीरास्वास्थ्यदुःखासिकाः ।
सौम्ये लग्नगते सुखस्थितिजयारोग्यार्थसम्पत्तयः
कीर्तिस्थानविशेषलब्धिरिति विज्ञेयं फलं पृच्छताम् ॥ ५४ ॥

पापे वित्तगते स्वपूर्वनिचितद्रव्यक्षयो वक्त्ररु-
ग्भर्तव्यामयदक्षिणाम्बकरुजो दुष्टोक्तिपात्रक्षती ।
सौम्ये वित्तगते पुरार्जितधनानामेव वृद्ध्युद्भवः
पात्राप्तिर्भरणीयरञ्जनसुखं प्रष्टेति यायात् फलम् ॥ ५५ ॥

पापे भ्रातृगते सहायविगमः सोदर्यरोगादिकं
वक्षःकन्धरदक्षिणश्रवणरुग्धीदौष्ट्यधैर्यक्षयाः ।
सौम्ये भ्रातृगते सहोदरसहायारोग्यलाभाधिकं
सद्बुद्धेरुदयश्च धैर्ययुतिरित्येतत्फलं पृच्छताम् ॥ ५६ ॥

मातुर्मातुलभागिनेयसुहृदां गोवेश्मशय्यासन-
क्षेत्राणामपि वाहनस्य च विपद्धृद्देशरुक्चासुखम् ।
कूपाद्यम्बुविदूषणं सुखगते पापे शुभे वाहनं
क्षेत्रं गोशयनासनानि सुखमित्येषां हि लाभो भवेत् ॥ ५७ ॥

पापे पञ्चमगेऽस्य दोषवशतो मौढ्यादिना रुङ्मृति-
र्वापत्यस्य पुराणपुण्यविलयो वेद्या मनःकुण्ठता ।
क्रोधामात्यरुगादिकं त्वथ शुभे पुत्रस्य लाभोऽथवा-
रोग्यं धीप्रतिभोदयश्च मनसस्तुष्टिश्च पुण्योदयः ॥ ५८ ॥

पापे षष्ठगते तु षष्ठभवनोक्ताङ्गे व्रणस्योद्भव-
श्चोरारिव्यसनं च नाभिकटिरुग्विघ्नोद्भवः कर्मसु ।
पापस्यास्य च दोषसम्भवगदः सौम्ये च शत्रुक्षयो
रोगाणामभवः सतां तु शमनं प्रष्टुः समादिश्यताम् ॥ ५९ ॥

पापे सप्तमगे कलत्रमरणं रोगो वियोगोऽस्य वा
भुर्तुर्वा गमनान्तराय उदियात्स्युर्मूत्रकृच्छ्राण्यपि ।

सौम्ये सप्तमगे विवाहघटनं नष्टार्थलाभः सुदृ-
ग्भोगावाप्तिविदेशयानसुहृदायानादिकं स्यात् फलम् ॥ ६० ॥

मदने पापसमेते दाहादिकमपि गृहस्य भार्यायाः ।
बलवच्छुभसंयुक्ते गृहकरणं सम्भवेच्च जायायाः ॥ ६१ ॥

पापे रन्ध्रगते तु दासजनरुक्प्रत्यूहगुह्यामया
लोकैर्विग्रहणं धनादिहरणं चोरैर्नृपैर्वारिभिः ।
रोगाश्चारुचिपूर्वकाः स्युरपि च स्याच्छङ्कनीया मृतिः
सौम्ये रन्ध्रगते तु रोगविरहो दैर्घ्यं तथा चायुषः ॥ ६२ ॥

अपवादो मठापत्तिरपि पापेऽष्टमस्थिते ।
मठाद्यालयसम्पत्तिमपि कुर्याच्छुभोऽत्रगः ॥ ६३ ॥

पापे धर्मस्थिते स्याद् गुरुजनपितृपौत्रादिरुग्भाग्यहानि-
र्वेद्यं धर्मेश्वरानुग्रहसुकृततपोहानयो निष्कृपत्वम् ।
सौम्ये धर्मस्थिते स्याद् गुरुपितृमनसश्चेश्वराणां प्रसादो
वृद्धिर्भाग्यस्य धर्मस्य च शुभतपसामार्द्रता पौत्रसौख्यम् ॥ ६४ ॥

पापे कर्मगते तु कर्मविहतिर्दुष्कीर्तिराज्ञाक्षति-
र्दासालम्बनयोर्विनाशनमपि स्याज्ञानुरुक्प्रोषणम् ।
सौम्ये पद्धतिमण्डपामरगृहाद्युत्पादनं कर्मणा-
माज्ञालम्बनयोश्च सिद्धिरपि दासावाप्तिकीर्त्युद्गमौ ॥ ६५ ॥

पापे लाभे स्थितवति सुतज्येष्ठयोरामयाद्यं
जङ्घावामश्रवणरुगमुष्योक्तताम्रादिलाभः ।
सौम्ये दुःखप्रशमनसमस्तेप्सिताप्त्यर्थलाभाः
संज्ञाध्यायादिषु तदुदितस्यापि लाभागमाद्यम् ॥ ६६ ॥

पापे द्वादशगे तु दुर्व्ययपदभ्रंशाङ्घ्रिवामाक्षिरु-
क्पाताः पापमतिप्रवृद्धमिति वक्तव्यं फलं पृच्छताम् ।
सौम्ये द्वादशगे व्ययो वितरणप्रायो न दुष्टव्ययः
पापानामभवः सतां तु शमनं चेत्यादिकं स्यात्फलम् ॥ ६७ ॥

भावाधिपफलानि

लग्ने बलिष्ठे जगति प्रभुत्वं सुखस्थितिं देहबलं सुवर्चः ।
उपर्युपर्यभ्युदयाभिवृद्धिं प्राप्नोति बालेन्दुवदेष जातः ॥ ६८ ॥

दुःस्थे लग्नपतौ निरोधनमुपैत्यज्ञातवासं भयम् ।
व्याध्याधीनपरक्रियाभिगमनं स्थानच्युतिं चापदम् ॥ ६९ ॥

पाकेऽर्थनाथस्य कुटुम्बसिद्धिं सत्पत्रिकाप्तिं सुखभोजनं च ।
प्राप्नोति विद्याभ्यसनं सदुक्तिं धनानि वक्ता सदसि प्रशस्तः ॥ ७० ॥

जाड्यं संसदि वाक्कुटुम्बचलनं दुष्पत्रिकां दृग्रुजम् ।
वाग्दोषं द्रविणव्ययं नृपभयं दुःस्थे द्वितीयाधिपे ॥ ७१ ॥

शौर्ये सवीर्ये सहजानुकूल्यं सन्तोषवार्ताश्रवणं च शौर्यम् ।
सेनापतित्वं लभतेऽभिमानं जनाश्रयं सद्गुणभाजनत्वम् ॥ ७२ ॥

दुश्चित्काधिपतौ सहोदरमृतिं कार्ये दुरालोचनाम् ।
अन्तश्शत्रुनिपीडनं परिभवं तद्गर्वभङ्गं वदेत् ॥ ७३ ॥

बन्धूपकारं कृषिकर्मसिद्धिं स्त्रीसङ्गमं वाहनलाभमेति ।
क्षेत्रं गृहं नूतनमर्थसिद्धिं स्थानं प्रशस्तं च सुखेशदाये ॥ ७४ ॥

मातृक्लेशमरिष्टमिष्टसुहृदां क्षेत्रगृहोपप्लुतिम् ।
पश्वश्वादिविनाशनं जलभयं पातालनाथेऽबले ॥ ७५ ॥

पुत्रप्राप्तिं बन्धुविलासं भूपतिमैत्र्यं साचिव्यं च ।
पुत्रेशस्य दशायां प्राज्यं भोज्यं मृष्टं बहुमानत्वम् ॥ ७६ ॥

वीर्योने प्रतिभापतौ सुतमृतिं बुद्धिभ्रमं वञ्चनाम् ।
अध्वानं ह्युदरामयं नरपतेः कोपं स्वशक्तिक्षयम् ॥ ७७ ॥

रिपून् निहन्ति साहसैररीश्वरस्य वत्सरे ।
अरोगतामुदारतामधृष्यतामतिश्रियम् ॥ ७८ ॥

चोराद्भीतिमनर्थतां च दमनं रोगान् बहून् दुष्कृतिम् ।
भृत्यत्वं लभतेऽपमानमयशः षष्ठेशदाये व्रणम् ॥ ७९ ॥

सम्पाद्य वस्त्राभरणानि शय्यां प्रीतो रमण्या रमतेऽतिवीर्यः ।
करोति कल्याणमहोत्सवादीन् सन्तोषयात्रां च मदेशदाये ॥ ८० ॥

जामातृव्यसनं कलत्रविरहं स्त्रीहेत्वनर्थागमम् ।
द्यूनेशे विबलिन्यसत्यभिरतिं गुह्यामयं चाटनम् ॥ ८१ ॥

ऋणविमोचनमुच्छ्रितिमात्मनः कलहकृत्यनिवृत्तिमुपैति सः ।
महिषपश्वजभृत्यजनागमं वयसि रन्ध्रपतेर्बलशालिनः ॥ ८२ ॥

रन्ध्रेशायुषि शोकमोहमदमात्सर्यादिमूर्छोच्छ्रितिम् ।
दारिद्र्यं भ्रमणं वदेदपयशो व्याधीनवज्ञामृतिम् ॥ ८३ ॥

स्त्रीपुत्रपौत्रैः सहबन्धुवर्गैर्भाग्यश्रियं चानुभवत्यजस्रम् ।
श्रेयांसि कार्याण्यवनीशपूजां भाग्येशदाये द्विजदेवभक्तिम् ॥ ८४ ॥

पूर्वोपासितदेवकोपमशुभं जायातनूजापदम् ।
दौष्कृत्यं स्वगुरोः पितुश्च निधनं दैन्यं शुभे दुर्बले ॥ ८५ ॥

यत्कार्यमारब्धमुपैत्यनेन तस्यैव सिद्धिं सुखजीवनं च ।
कीर्तिं प्रतिष्ठां कुशलप्रवृत्तिं मानोन्नतिं कर्मपतेर्दशायाम् ॥ ८६ ॥

यद्यत् कर्म करोति तत्तदफलं स्यान्मानभङ्गो नभो-
भावे दुर्गुणतां प्रवासमशुभं दुर्वृत्तिमापन्नताम् ॥ ८७ ॥

ऐश्वर्यमव्याहतमिष्टबन्धुसमागमं भृत्यजनांश्च दासान् ।
संसारसौभाग्यमहोदयांश्च लभेत लाभाधिपतेर्दशायाम् ॥ ८८ ॥

श्रवणमशुभवाचां भ्रातृकष्टं सुतार्तिं भवपयसि च दैन्यं वञ्चनं कर्णरोगम् ॥ १/२ ॥

व्ययेशितुर्वयस्यतिव्ययं करोति सज्जने ।
अघौघनाशिनीं शुभक्रियां महीशमान्यताम् ॥ ८९ ॥

बहुरुजमपमानं बन्धनं सर्वसम्पत्क्षयमपरशशीवाऽऽयाति रिःफेशदाये ॥ १/२ ॥
सदसत्सामान्यफलं लग्नादिष्विति पुनर्विशेषफलम् ।
शूरस्तब्धाद्युदितं होरायामिह विचिन्त्य वाच्यमिह ॥ ९० ॥

**लग्नादिगतमान्दिफलम्**

रोगी क्षताङ्गो गुळिके तनुस्थे निन्द्याभिभाषी धनगे विवेषः ।
सोत्थं द्विषन् भ्रातृगते सशौर्यः सुखादिहीनः सुखगेऽरिभीतः ॥ ९१ ॥

गुर्वादिनिन्दाकृदनात्मजः स्याच्छूली सुतस्थे रिपुगे निजद्विट् ।
विषेक्षणो वंशविदूषणश्च कलत्रहन्ता मदगेऽतिकामः ॥ ९२ ॥

धीमान् बहुव्याधिरनायतायुर्विषाग्निशस्त्रैर्मृतिरष्टमस्थे ।
धर्मस्थिते धर्मतपोमनूनः खस्थे सुकीर्तिः परकार्यसक्तः ॥ ९३ ॥

कुर्याच्च पौरुषयुतो धनवाहनार्थानैश्वर्यवान् भवगते बहुभृत्ययुक्तः ।
दुःस्वप्नवांश्च कुनखी विकलो व्ययस्थे लग्नादिभावगतमान्दिफलं प्रदिष्टम् ॥ ९४ ॥

**धूमादिपञ्चदोषानयनम्**

नानालोकविदन्वितो दिनकरो धूमाह्वयो मण्डला-
च्छुद्धेऽस्मिन् व्यतिपातकोऽत्र भगणार्धाढ्ये परीवेषकः ।
तस्मिन् मण्डलशोधिते खलु भवेदैन्द्रन्धनुस्तत्र तु
ज्ञानौत्सुक्ययुते तु केतुरुदितस्तत्रैकभाढ्ये रविः ॥ ९५ ॥

## लग्नादिद्वादशभावगतधूमादिदोषफलानि

### धूमः

1. कूपे स्यात्पतनं तनौ
2. यदि वचःस्खालित्यमर्थस्थितः
3. पङ्गुर्भ्रातरि सोदरः
4. सुरगृहं रक्षेत्सुखे मातुलः
5. क्रुद्धः पञ्चमभे
6. अरिभे खलु भवेद्व्याघ्रेण दष्टो मुखे
7. याति भ्रष्टतया मदे तु
8. निधने धूमः क्षतिः शस्त्रतः
9. धर्मे स्वल्पतपाः
10. खभेऽशनिहतिः
11. लाभे लभेतेतरद्वेश्मापि
12. प्रवसेद्व्यये

### व्यतीपातः

1. अथ तनुगः स्याच्चेद्व्यतीपातकः श्वित्री
2. वाचि सकौशलः
3. सहजभे गानी
4. सुखेऽश्वागमः
5. दुःखं पुत्रभयं सुते
6. अरिभवने छिद्रावहः
7. अस्तेऽधनः
8. वेत्ता सर्वकला मृतौ

9. तपसि भाग्योनः
10. नभस्यग्निभीः
11. लाभे भूपतिसत्कृतः
12. व्ययगृहे भ्रष्टः

## परिवेषः

1. अथ सर्पान्मृतिर्लग्नस्थे परिवेषनाम्नि
2. निधिकृत्स्वे
3. भ्रान्तिमान् सोदरे
4. वासो नात्मगृहे सुखे
5. मनसि बद्धः
6. अन्तःस्थचोरो रिपौ
7. काणोऽस्ते
8. क्षतिरायुधेन निधने
9. गुर्वाद्यभक्तो गुरौ
10. औदार्यं दशमे
11. भवे तु जडवाक्
12. दीर्घामयो द्वादशे

## इन्द्रचापः

1. वातव्याध्यवशीकृताखिलतनुर्वृत्रारिचापोदये
2. बाधिर्यं वचसि
3. द्विजन्मवधपूर्वाकृत्यकृद्विक्रमे
4. वेश्मस्थे गणरक्ष्यहा
5. मनसि वाग्भीमन्त्रवादावुभौ
6. षष्ठे शत्रुभयम्
7. मदेऽङ्गविकलो भार्यानुभूतिश्च नो
8. बद्धो भूरितराशया प्रकटयन् जाड्यं चरेदष्टमे
9. बन्धाद्वात्मजतो मृतिस्तपसि
10. खे स्वल्पाम्बरः शीघ्रभुक्
11. लाभे भूरिपराक्रमश्च मृगयासक्तः
12. व्यये प्रोषणं कोपाद्भूमिपतेः

## केतुः

1. अथोदयगते केतौ विकेशोऽग्रतः
2. दौर्बल्यं गिरि सानुनासिकवचा वाग्भीश्च
3. सोत्थे द्वयम् (दौर्बल्यं गिरि सानुनासिकवचाः)
4. वेश्मस्थे सुरभिः सदा
5. हृदि नरः शूली वधूर्युग्मसूः
6. अन्धो रुद्धमरुन्म्रियेत परगेहेऽरौ
7. मदे मोषणात्
8. रन्ध्रस्थे विषभोजनात्
9. तपसि विक्रान्तश्च दुर्मृत्युभाक्
10. वृक्षेणाभिहतो निपत्य तरुतो वा खे मृतिं प्राप्नुयात्
11. आये शेवधिभाक्
12. व्यये शयनसौख्याभावदुःखव्ययाः

**फलप्राप्तिकालनिर्णयः**

फलाप्तिः कल्प्यते येन तस्य कालोऽयनादिकः ।
तद्भुक्तांशकसंख्याघ्नस्तत्सिद्धौ समुदीर्यताम् ॥ ९६ ॥

लग्ने यावानुदेत्यंशस्तत्संख्याघ्नोऽयनादिकः ।
कालो वाच्योंऽशकेशस्य कार्ये वैरिजयादिके ॥ ९७ ॥

लग्नाद्यावतिभे पापस्तावत्यब्देऽह्नि मासि वा ।
पक्षे क्षणेऽयने वर्तौ लग्नेशस्योचिते व्यथा ॥ ९८ ॥

भावाद्भावपतौ तु दृश्यदलगे तद्भावलाभोऽचिरात्
तत्रादृश्यगते शनैरिति भिदा भावात् पुनस्तत्पतिः ।
राशौ यावति तत्समे तु दिवसे मासेऽथवा भावना-
थारूढालयगेऽथवा हिमकरे भावस्य लाभो भवेत् ॥ ९९ ॥

लग्नं वा फलदातृगेहमथवा तस्योच्चभं वा यदा
यायादिन्दुरिनोऽथवाथ फलदो वाच्यं तदा तत्फलम् ।
भूते वा समये भविष्यति यदा लग्नस्य पापान्वय-
स्तत्कालेऽशुभमादिशेच्छुभसमायोगे शुभं पृच्छताम् ॥ १०० ॥

कालः स्वर्क्षदिनर्तवो निजगृहस्थार्केन्दुजीवादयः
सर्वेषां स्वदशानिजापहृतयः स्वीयोदयादावपि ।
खेटानां रविचन्द्रयोरयनमप्यत्रोत्तरं दक्षिणं
दातुं स्याद्गुणदोषसम्भवफलं सर्वं बुधैरूह्यताम् ॥ १०१ ॥

### इष्टानिष्टस्थानगतग्रहफलानि

मार्तण्डेऽनिष्टसंस्थे नृपशिवपितृकोपादिहृत्क्रोडनेत्र-
व्याध्यस्थिस्रावपित्तामयशिखिपशुभीताम्रनाशात्मपीडाः ।
इष्टस्थे सात्त्विकत्वं शिवपितृनृपतिप्रीतयस्ताम्रलाभ-
श्चार्थाप्तिः कम्बलाध्वाटनतृणकनकाद्यौषधैश्चोद्यमः स्यात् ॥ १०२ ॥

कोपो राज्ञा जनन्या रुगपि कफसमीरास्त्ररुग्वीर्यवत्स्वै-
र्वैरं कोपश्च दौर्गः कृषिधनयशसां संक्षयोऽनिष्टगेऽब्जे ।
राज्ञीदुर्गाप्रसूनां मुदणुतिलगुळाच्छादनाज्यद्विजस्त्री-
गोनौरत्नादितोऽर्थः कृषिधनयशसां वृद्धिरिष्टस्थितेऽब्जे ॥ १०३ ॥

प्रद्वेषः सोदराद्यैः क्षितिकनकविनाशोऽग्निचोरारिभीतिः
सेनानीरक्तकोपज्वरनयनरुजापात्रशस्त्राङ्गभङ्गाः ।

भौमेऽनिष्टस्थितेऽस्मिन् पुनरितरगते भूमिहेमायुधाप्तिः
सेनानीतुष्टता स्याद्धनमरिवधतो भ्रातृतो भूपतेश्च ॥ १०४ ॥

ज्ञेऽनिष्टस्थे तु कोपो हरियुवनृपयोर्दुर्वचस्तस्करार्ति-
स्तत्रेष्टस्थेऽश्वहेमक्षितिसुहृदवनीदेवगुर्वर्थलाभाः ।
अर्थो दौत्याच्च शिल्पैः स्तुतिरपि विदुषां वर्धनं बुद्धिवृत्तेः
सिद्धिर्धर्मक्रियाणां लिपिगणितधनं गोपसूनुप्रसादः ॥ १०५ ॥

जीवेऽनिष्टस्थिते स्याच्छ्रवणतनयरुग्विप्रदेवप्रकोपो
वैरं वा धर्महीनैः पुनरितरगते वर्धनं धीगुणानाम् ।
नित्यं यज्ञेन वेदाध्ययनमनुजपैर्भूपतेश्चार्थलाभो
लाभो दायादहेमाम्बरहयकरिणां विप्रदेवप्रसादः ॥ १०६ ॥

शुक्रेऽनिष्टस्थिते स्त्रीजनगदवसनापायलक्ष्मीवियोगाः
शोकः स्नेहान्निषादक्षितिपतिसचिवद्वेषगोरूप्यनाशः ।
इष्टस्थे रूप्यवस्त्राभरणमणिनिधिस्त्रीविवाहार्थलाभः
श्रद्धा गीते क्रियादिष्वपि च महिषगोमित्रमृष्टान्नलाभाः ॥ १०७ ॥

मन्देऽनिष्टस्थिते स्यादनिलकफरुजाज्ञानचौर्यादिकोप-
व्यापत्तन्द्रीश्रमा स्त्रीभृतकतनुभुवां भर्त्सनं व्यङ्गतेर्ष्या ।
इष्टस्थे दुःखनाशः परिणतवनिताभोगदासायसां पू-
श्श्रेणीग्रामाधिपत्यस्य च वरकमहिष्यादिकानां च लाभः ॥ १०८ ॥

मन्दोदितं स्वाश्रितभेश्वरोक्तं स्वोक्तं च राहोरथ भूमिजोक्तम् ।
स्वोक्तं निजाधिष्ठितराशिपोक्तं केतोश्च वाच्यं त्रितयं फलानाम् ॥ १०९ ॥

दोषाः केवलमेव चेद्विपदतीवाराद्विनिर्दिश्यतां
प्रश्ने केवलमेव चेत्खलु गुणा वाच्यास्तथा सम्पदः ।
मिश्रत्वे गुणदोषयोरधिकतामालोच्य वाच्यं फलं
यद्वा दोषजमेव भाग्यविकलाः प्रायोऽत्र लोका यतः ॥ ११० ॥

निर्याणं विषमामयो निजजनापायो गृहप्लोषणं
स्थानभ्रंशनरेन्द्रकोपजनविद्वेषार्थभूरिव्ययाः ।

चोरार्थापहृतिश्च मानविहतिर्दुष्कीर्तिरेवंविधा
वाच्याः स्युर्विपदो विलोक्य विहगान् भावांश्च दोषप्रदान् ॥ १११ ॥

आरोग्यं नृपमाननं धनसमायानं सुहृत्सम्भवः
साफल्यं सकलक्रियासु सततं चित्तप्रसादोदयः ।
स्थानप्राप्तिजनानुरागसुयशःसन्तानलाभादयो
वाच्याः स्युः खलु सम्पदोऽभिमतभावोपेतखेटोचिताः ॥ ११२ ॥

विद्याद् दृश्यार्धमास्थानमदृश्यं विजनस्थलम् ।
लग्नाधिपः स्थितो यत्र तद्वासी पृच्छको भवेत् ॥ ११३ ॥

एवं धनादिभावानां स्पष्टतां च निगूढताम् ।
विद्यादीशैः प्रकाशत्वमपि सूर्येन्दुयोगतः ॥ ११४ ॥

अदृश्यार्धस्थितेऽस्तेशे प्रष्टुः स्याद् गूढकामता ।
स्पष्टकामो भवेत्प्रष्टा द्यूनेशे दृश्यभागगे ॥ ११५ ॥

शुभोऽशुभर्क्षे जीर्णं संस्कृतादिभ्यां यदीरितम् ।
तत्सर्वं सर्वभावेषु योजनीयं हि युक्तितः ॥ ११६ ॥

**॥ इति प्रश्नानुक्रमे एकादशोऽध्यायः ॥**

* * *

## ॥ अथ द्वादशोऽध्यायः ॥

### देवानामनुकूलतादि च वदेद्बाधाभिचाराद्यपि

**देवैर्वा धर्मदेवैः फणिपितृगुरुभिर्ब्राह्मणैः प्रेतभूतैः**
**पीडा या स्यात्कृता सा तदनु भवति या दृग्भवा वाग्भवा वा ।**
**या स्याद्भूयो विषोत्था पुनरिह रिपुभिर्या कृता सा च तासां**
**हेतुश्चापि क्रमेण प्रतिविधिरपि च प्रोच्यते पृच्छकानाम्** ॥ १ ॥

देवताचिन्तनम्

अर्कः शम्भुरुदाहृतोऽखिलगृहेष्वर्को यदि द्वन्द्वभे
द्रेक्काणे प्रथमे गुहोऽत्र कथितो विघ्नेश्वरो मध्यमे ।
दुर्गा शीतकरो बली स विबलः काली स एवाबल
श्चामुण्डीप्रमुखास्तमोगुणजुषो भौमालयस्थो यदि ॥ २ ॥

कुमारो भैरवादिर्वा स्वाश्रितर्क्षवशात्कुजः ।
चामुण्डीभद्रकाल्याद्याः स चेद्युग्मसमाश्रितः ॥ ३ ॥

श्रीरामाद्यवतारविष्णुरितरक्षेत्रेषु चन्द्रात्मजो
व्यन्त्यत्र्यंशगतः स्थिरे तु भवने यद्येष गोपालकः ।
त्र्यंशेऽन्त्येऽत्र स विष्णुरेव हि पुनर्जीवो महाविष्णुर-
प्युक्तोऽयं ह्यखिलेश्वरोऽत्र तु भिदा ज्ञेया ग्रहर्क्षान्वयात् ॥ ४ ॥

अन्नपूर्णेश्वरी लक्ष्मीर्यक्षी वा भृगुनन्दनः ।
मन्दः शास्त्रादिकं दैवं राहुः सर्पगणः स्मृतः ॥ ५ ॥

देवपीडाचिन्तनम्

बाधकाधीश्वराः सन्तो यदि सूर्यादिखेचराः ।
देवतानां निजोक्तानां पीडां ब्रूयुरनिष्टगाः ॥ ६ ॥

कोपस्य कारणं कोपशमनाय प्रतिक्रिया ।
देवतानां ग्रहारूढस्थानभेदादथोच्यते ॥ ७ ॥

सूर्यादीनां ग्रहाणां व्ययभवनगतः पापखेटो यदि स्या-
त्स्वोक्तानां देवतानां वपुषि विकलता डुण्डुभस्पर्शनं स्यात् ।
संयोगे मान्दिराह्वोरथ रविजयुतौ जीर्णता वाशुचिर्वा
योगे भौमस्य रक्षाविहतिरभिहिता रक्षकस्वान्तभेदात् ॥ ८ ॥

लग्नस्थे पापयुक्ते सति खलु विहगे बिम्बदोषोऽत्र वाच्यो
बिम्बं भिन्नं हि तस्मिन् धरणितनुभुवा शुद्धिरेवान्यखेटैः ।
बिम्बं तत्र प्रदेयं भवति खलु मुदे खेचरेऽथालयस्थे
जीर्णं वेश्मालयं तन्नवमथ कुरुतां दीयतां वाऽन्यवेश्म ॥ ९ ॥

नृत्तं द्यूनगते कुजार्कगृहगे खेटे प्रदीपः स्मृतः
शुक्रेन्द्वालयगे तु पायसमपि क्षीरं घृतं वा पुनः ।
बौधे चन्दनमार्यमन्दिरगते माला प्रसूनानि वा
मन्दर्क्षे खलु भूषणानि वसनं तत्तन्मुदे दीयताम् ॥ १० ॥

रन्ध्रगे कर्मसंस्थे च पूजा वा बलिकर्म वा ।
गीतं वाद्यं च रिःफस्थे तत्तत्प्रीत्यै प्रदीयताम् ॥ ११ ॥

लग्नादौ प्रतिबिम्बदानजपपूजाधामसन्तर्पणै-
रुक्शान्तिः प्रतिकारनृत्तबलिदेवोपासनैश्च क्रमात् ।
दन्तिस्कन्धसमर्पितेन बलिनाम्भस्तर्पणेनान्त्यगे
बाधोक्तौ तु तदीश्वरे न च ततः प्रोक्तं न किञ्चिद्व्यये ॥ १२ ॥

अर्के वार्कगृहस्थे वा विहगेऽनिष्टसंस्थिते ।
देवाराधनमाधेयं पृच्छतां रोगशान्तये ॥ १३ ॥

चन्द्रे वा तद्गृहस्थे वा यवागूप्रतिपादनम् ।
शङ्खाभिषेकधाराद्यमपि देवे विधीयताम् ॥ १४ ॥

देवे दीपसमर्पणं च हवनं भौमे च तत्क्षेत्रगे
चान्द्रौ तद्गृहगे च नृत्तकरणं जीवे च तत्क्षेत्रगे ।
कर्तव्यं द्विजभोजनं च वितरेद्देवाय हेमादिकं
शुक्रे तद्गृहगे च रोगशमनायान्नं प्रदेयं बहु ॥ १५ ॥

मन्दे मन्दगृहस्थे वा विहगेऽनिष्टसंस्थिते ।
नीचानामन्नदानं स्याद् भूदानं चार्तिशान्तये ॥ १६ ॥

लग्नस्थेषु ससत्त्विनादिषु वदेत्तद्देवतानुग्रहं
प्रष्टॄणामथ बाधकालयगते धर्माधिपे प्राक्चिरम् ।
यत्किञ्चित्समुपास्य दैवतममुष्योपेक्षया साम्प्रतं
तत्कोपोऽस्ति भजेत दैवतमदो भद्रार्थमित्यादिशेत् ॥ १७ ॥

## देवस्वापहारदोषनिरूपणम्

बाधकाद्यहितस्थाननाथे लाभार्थगे ग्रहे ।
तत्तद्दैवतकोपः स्याद् देवस्वस्यापहारतः ॥ १८ ॥

हेतुर्धातुरुदाहृतश्चरगृहे धातुग्रहे वोदिते
मूलं मूलखगे स्थिरे द्वितनुभे जीवश्च जीवग्रहे ।
मूलं भूमिमहीरुहाद्यमुदितं हेमादयो धातवो
जीवा मर्त्यचतुष्पदप्रभृतयो राशेः समानाश्च ते ॥ १९ ॥

जीवे हेतौ त्वात्मना कल्पितानां पश्वादीनामीश्वरस्याप्रदानात् ।
कोपो देवस्यापहृत्याथवैषां जीवार्थं वागर्पितानर्पणाद्वा ॥ २० ॥

धातौ हेतौ देयहेमाद्यदानात्स्वीकाराद्वा देवसम्बन्धिनोऽस्य ।
मूले हेतौ भूमिधान्यादिकानां कोपो देवस्यापहाराद्यवद्यैः ॥ २१ ॥

चन्द्रारोरगसौरैर्धातुर्मूलं किलार्कशुक्राभ्याम् ।
जीवो जीवबुधाभ्यां मेषाश्विन्यादि धात्वादि ॥ २२ ॥

## धर्मदैवबाधाचिन्तनम्

धर्मदैवकृता बाधा तदनु प्रोच्यतेऽत्र तु ।
अर्कः शम्भ्वादिभिः पद्यैस्तद्विदा चावगम्यताम् ॥ २३ ॥

बाधाधीशे गतवति सुखं बाधकस्थानसंस्थे
वेश्मेशे वा सुखपतिगृहाधिष्ठिते बाधकेशे ।
वेश्मेशे वाप्यमुकगृहगे धर्मदैवस्य बाधा
वाच्या प्रष्टुः पुनरधिकता लक्षणाधिक्यतोऽस्याः ॥ २४ ॥

चतुर्थनाथस्य तु दैवतं यत्तस्यानुरूपं खलु धर्मदैवम् ।
तत्प्रीतये यत्क्रियते स्वपूर्वैः पूजादिकं तत्तु विधेयमत्र ॥ २५ ॥

कोपे हेतुः प्रतिविधिरमुष्यापि यो देवतानां
पूर्वं प्रोक्तः स इह सुधिया योजनीयोऽपि योज्यः ।
बाधासंस्थे शशिनि च रवौ धर्मदैवस्य बाधा
वाच्या भक्त्या प्रतिसममिदं पूजनीयं समृद्ध्यै ॥ २६ ॥

## सर्पबाधाचिन्तनम्

जीवः सन् बाधकेशो व्ययमृतिरिपुगो यद्यहेः केन्द्रसंस्थः
सर्पाणामुत्तमानां यदि स सुरगुरुर्मान्दिकेन्द्रेऽधमानाम् ।
पीडा वाच्याथ बाधाभवनमुपगते चोरगे सर्पबाधा
तेषां हीनोत्तमत्वं शशिदिनकरयोर्योगवीक्षादिभिः स्यात् ॥ २७ ॥

राहौ बाधकषष्ठरन्ध्रखगते कार्यो बलिः प्रीतये
वेश्मस्थे खलु चित्रकूटकरणं गानक्रिया रिःफगे ।
लग्नेऽस्ते च सुधापयोवितरणं नृत्तक्रिया वास्तगे
स्थानेष्वेष्वपि कीर्तनात्प्रतिविधेर्बाधोच्यतां भोगिनाम् ॥ २८ ॥

स्थानेष्वप्यखिलेषु सर्पबलिरेवोदीर्यतां वा पुन-
स्तृप्यन्त्युत्तमभोगिनस्तु बलिना नीचास्तु गानादिभिः ।
सर्वेषां बलिकर्म तुष्टिकरणं वक्तव्यमेवं हि वा
सर्पप्रीतिरवश्यमेव करणीयारोग्यपुत्राप्तये ॥ २९ ॥

अण्डानां चरगे किशोरफणिनां नाशोऽसुरे द्वन्द्वगे
लग्नस्थे तदिदं द्वयं स्थिरगते बाधाकरो भूरुहाम् ।
कृत्वाण्डान्यहयश्च नीचफणिनां ताम्रेण हेम्ना मुदे
देयान्युत्तमभोगिनां यदि नगा नष्टाश्च तान् स्थापयेत् ॥ ३० ॥

एकादश चरे लग्ने द्वन्द्वे सप्त स्थिरे नव ।
अण्डानि चाहयश्चेति सम्प्रदायविदां वचः ॥ ३१ ॥

स्वर्णेन नागप्रतिमां च रौप्येणाण्डानि चैकादश चेच्चरर्क्षे ।
स्थिरे नव द्वन्द्वगते विलग्ने सप्ताथ वल्मीकमिहास्तु ताम्रम् ॥ ३२ ॥

राहुर्मान्दियुतस्तदस्तनवमापत्यस्थितो वा यदि
प्रष्टुः स्यात्फणिबाधनं क्षितिसुतः केन्द्रे तु राहोर्यदि ।
बाधाहेतुरुदीर्यतां फणिगृहे क्षोणीरुहच्छेदनं
भूमेर्वा खननं विहिंसनमहेर्वल्मीकभेदोऽथवा ॥ ३३ ॥

यद्वोद्यानमहीरुहादिदहनं वा चित्रकूटच्छिदा
राहोः केन्द्रगतः पुनर्यदि शनिर्मान्दिश्च नागालये ।
मूत्रोच्छिष्टशकृद्विसर्गकरणं निष्ठीवनं वान्तिके
चण्डालोपगतिश्च सैरिभकरिप्रक्षोभणं वा पुनः ॥ ३४ ॥

मान्दिः केन्द्रगतो यदीह फणिनो निष्ठीवनं मैथुनं
मूत्रोच्छिष्टशकृद्विसर्ग उत वा नागालये वान्तिके ।
वृक्षाद्यं यदि चेत्प्रणष्टमिह तत्कार्यं पुनः पूर्ववत्
त्यक्तोच्छिष्टमलादिसम्भव इदं पुण्याहमप्याचरेत् ॥ ३५ ॥

## पित्रोः शापचिन्तनम्

भौमर्क्षांशकयोरशीतकिरणो बाधागतश्चेत् पितुः
शापोऽस्त्येवमुडुप्रभुर्यदि भवेच्छापं जनन्या वदेत् ।
पित्रोः शाप इनोडुनाथगृहयोश्चानिष्टगे स्यात् खरे
शुश्रूषार्थसमर्पणादिभिरिह प्रीतिं विदध्यात् तयोः ॥ ३६ ॥

पापश्चेद्बाधकस्थः सुरगुरुसहितस्तद्गृहे वा द्विजानां
देवानां वास्ति शापो यदि रविभवने तद्युतो वात्र पापः ।
पूर्वेषां वा गुरूणां यदि स धरणिजस्तर्हि शापो महान् स्यात्
प्रीतिं देवद्विजानां स्वगुरुजनमनःप्रीणनं चात्र कुर्यात् ॥ ३७ ॥

षष्ठेशो नवमे रिपौ नवमपः स्याच्चेत् पितुर्वा गुरोः
पूर्वेषामथवात्मनः स्वविषयं विज्ञेयमप्रीणनम् ।
सूर्ये षष्ठगते तदीशसहिते वा वाच्यमेतत् पितु-
श्चन्द्रेणापि चतुर्थषष्ठपतितश्चैवं जनन्या वदेत् ॥ ३८ ॥

**प्रेतबाधाचिन्तनम्**

अब्ददीक्षादिलोपेन प्रेता याताः पिशाचताम् ।
स्वजनान् बाधमानास्ते चरन्तीति खलु स्मृतिः ॥ ३९ ॥

बाधा प्रेतोद्भवा स्यात् स्थितवति गुलिके बाधकेऽनिष्टभे वा
तत्रारक्षांशसंस्थो यदि कुजसहितो मान्दिरारेक्षितो वा ।
प्रेतः स्यादग्निशस्त्रप्रभृतिकृतमृतिर्मन्दसम्बन्ध एवं
मान्देश्चेत् प्रेत एष स्वविरहिततया दुःखितः सन् परेतः ॥ ४० ॥

प्राप्तो मृत्युमसौ भुजङ्गदशनाद्युक्तेक्षिते राहुणा
नद्यादौ पतनेन तोयभवने मान्दौ सपापान्वये ।
सम्बन्धे गुलिकस्य चैवमसतां प्रेतास्तु दुर्मृत्यवो
विज्ञेया गुलिकांशराशिवशतो वाच्या च पुंस्त्रीभिदा ॥ ४१ ॥

मान्देर्भ्रात्रादिभावस्थितितदधिपतत्कारकेक्षान्वयाद्यैः
प्रेताः स्युः सोदराद्याः स्थिरभवनगते मन्दजे प्रेत एषः ।
मृत्युं प्राप्तस्त्विदानीं स यदि चरगतः प्राक्तनः सोऽथ मान्दौ
वेश्मस्थे तत्पतीक्षान्वयवति गृहसम्बन्धवान् नान्यथा चेत् ॥ ४२ ॥

प्रेतस्य बालता वाच्या मान्दौ राश्यादिसंस्थिते ।
राश्यन्तस्थे जरन्नेव मध्यस्थे वय ऊह्यताम् ॥ ४३ ॥

चन्द्राद्यालयतद्युक्ते मान्दावेकादिकं वयः ।
प्रेतस्यैके स्वबाल्यादिवशादुडुपतेर्वयः ॥ ४४ ॥

प्रेतस्य जातिजिज्ञासा जायते यदि कुत्रचित् ।
मान्द्यधिष्ठितराश्यंशजातिं तत्र विनिर्दिशेत् ॥ ४५ ॥

प्रेतबाधामिति ज्ञात्वा कार्यावश्यं प्रतिक्रिया ।
आपन्नो यदि तत्प्रीतौ सम्पच्चात्राभियुक्तवाक् ॥ ४६ ॥

कोपः प्रेतस्य कुर्यात्तनयविहननं चामयादीननर्थां-
स्तत्प्रीत्यै पार्वणाद्यं पितृगणमनसः प्रीणनं श्राद्धकर्म ।

कुर्याच्च क्षेत्रपिण्डं तिलहवनमथो ब्राह्मणानां च भुक्तिं
प्रीताः प्रेतास्त्वमीभिर्विदधति सकलाः सम्पदः सन्ततिं च ॥ ४७ ॥

**ब्रह्मरक्षोबाधाचिन्तनम्**

गुरुणा भृगुणा वाऽपि मान्दिर्युक्तोऽथवेक्षितः ।
तयोः क्षेत्रांशसम्बन्धाद्ब्रह्मरक्ष इति स्मृतः ॥ ४८ ॥

बाधर्क्षेशे च जीवे यदि भृगुतनये बाधकारूढसंस्थे
भूपुत्रे भानुपुत्रे निधनपतियुते वेक्षिते वाऽष्टमर्क्षे ।
जीवर्क्षे पापयोगे स्वरभवनगते सर्पभौमौ त्रिकोणे
बाधायां ब्रह्मरक्षस्त्वखिलसुखसुतच्छेदनं वा विदध्यात् ॥ ४९ ॥

आरूढाधिपतौ गुरौ भृगुसुते बाधेशयुक्तेक्षिते
रन्ध्रेशेऽपि च मान्दिपेन सहिते चेद्ब्रह्मरक्षो भवेत् ।
सम्पत्कान्तिसुखक्षयं मतिहर्तिं पुत्रादिनाशं गृहे
कुर्याद्भूसुरभोजनं च विधिवत्कृत्वा हरिं तर्पयेत् ॥ ५० ॥

**गोरक्षोबाधाचिन्तनम्**

शुक्रे सपापे चतुरङ्घ्रिभागे बाधान्विते मन्दजमन्दयुक्ते ।
पापान्तरस्थे च तदीक्षिते वा गोरक्षसां दोषमुशन्ति सन्तः ॥ ५१ ॥

चतुष्पदे बाधककेन्द्रगे वा दुःस्थानपे तत्सहितेक्षिते वा ।
शुक्रे बलोने रिपुरिःफसंस्थे वदन्तु रक्षांसि गवां वधेन ॥ ५२ ॥

**मार्जालरक्षोबाधाचिन्तनम्**

मार्जालरक्षसां बाधां बुधेनैवं विचिन्तयेत् ।
सर्पादीनां तथान्येषामयं न्यायो हि चिन्त्यताम् ॥ ५३ ॥

**दृष्टिबाधानिरूपणम्**

अथ दृष्टिभवा बाधाः कथ्यन्ते तत्र ये नराः ।
नार्योऽथवा ग्रहैर्बाध्याः शास्त्रोक्तान् कीर्तयामि तान् ॥ ५४ ॥

लुब्धं क्रूरं भयार्तं हृषितमतिशठं पूर्ववैरानुबद्धं
नष्टद्रव्यं वियुक्तं प्रतिहतमशुचिं प्राप्तकालं सरोगम् ।

हासान्धं कान्तदेहं निधिविलयकरं कातरं भूषिताङ्गं
रात्रावेकाकिनं च स्मरमथनगणास्तं पुमांसं ग्रसन्ति ॥ ५५ ॥

तैलाभ्यक्तां प्रसूतामभिनवसुरतां मद्यपानानुरक्तां
नग्नामुत्पन्नसत्त्वां स्मरशरविवशां मुह्यमानां विहारैः ।
रथ्या शृङ्गाटकस्थामृतुसमययुतां पुंश्चलीकां रुदन्ती-
मेकान्तां कान्तदेहां स्त्रियमपि विषमा गुह्यकाः संस्पृशन्ति ॥ ५६ ॥

अवमानमृणं वैरं विघ्नो भाग्यविपर्ययः ।
ईश्वराज्ञा च कल्प्यन्ते कारणं ग्रहपिडने ॥ ५७ ॥

**दुष्टग्रहाणां क्रीडास्थानानि**

गुहाश्मकूटशैलाग्रवनोपवनसानुषु ।
सरिद्वापीसरःकूपतटाकोदन्वतां तटे ॥ ५८ ॥

सङ्गमे सरिदावर्ते गोकुले शून्यमन्दिरे ।
एकवृक्षे चितास्थाने प्रभ्रष्टे देवतागृहे ॥ ५९ ॥

निधिदेशे रसक्षेत्रे बिलद्वारे चतुष्पथे ।
ग्रामसीमान्तरे मातृस्थाने च क्षेत्रतीर्थयोः ॥ ६० ॥

आरामोद्यानयोः सौधे प्रासादाट्टालकेषु च ।
क्रीडापरा वसन्त्येते स्थानेष्वेतेषु हि ग्रहाः ॥ ६१ ॥

**दुष्टग्रहभेदाः**

रुद्रकोपोद्भवा एते ह्यन्ये च बहवो ग्रहाः ।
बलिकामा रन्तुकामा हन्तुकामा इति त्रिधा ॥ ६२ ॥

एते ग्रहाः पुनर्ज्ञेयाः सौम्यताग्नेयतावशात् ।
द्विधा च तद्विदा ज्ञेया ग्रहतत्स्थितिभेदतः ॥ ६३ ॥

बाधन्ते हन्तुकामाः कतिचन कतिचिद्देवता भोक्तुकामाः
पुन्नारी रन्तुकामाः पुनरपि कतिचित्तासु या हन्तुकामाः ।
घ्नन्त्येवैता गृहीत्वा बलिमिह विसृजन्त्यत्र या भोक्तुकामा
रन्तुं या बाधमाना अपि च बलिशतैर्नैव ताः सन्त्यजन्ति ॥ ६४ ॥

## खेटसम्बन्धेन दुष्टग्रहनिरूपणम्

भानो रुद्रगणोग्रदेवभुजगाधीशा विधोः किन्नरा
यक्षाद्या ग्रहपन्नगाः क्षितिसुतस्योग्रा हि रक्षोग्रहाः ।
भूता भैरवदेवताश्च शशिजस्याट्टालगाः किन्नरा
वागीशस्य शुभग्रहाः शुभतरा नागास्त्रिमूर्त्यादयः ॥ ६५ ॥

यक्षीमातृभुजङ्गमा भृगुसुतस्यार्कात्मजस्याशुभा
भस्मारूक्षपिशाचकश्वलमुखा निस्तेजसंज्ञा ग्रहाः ।
राहोः सर्पपिशाचपन्नगभृतः प्रेतग्रहाद्युद्भवाः
केतोस्तेऽखिलदेहिनां विदधते रोगाननिष्टर्क्षगाः ॥ ६६ ॥

बाधकस्थानगे सूर्ये शैवभूतादिपीडनम् ।
चन्द्रे दुर्गाकृतं रोगं धर्मदैवकृतं गदम् ॥ ६७ ॥

भौमे स्कन्दकृतं व्याधिं भैरवादिनिपीडनम् ।
सौम्ये गन्धर्वयक्षादिविमानस्थानवासिनाम् ॥ ६८ ॥

जीवे ब्राह्मणशापं च देवानामपि कोपनम् ।
शुक्रे यक्षीकृतं रोगं ब्रह्मराक्षसपीडनम् ॥ ६९ ॥

मन्दे तु भूतनाथानां शैवानां पीडनं तथा ।
राहौ सर्पकृतं रोगं केतौ चाण्डालदैवतम् ॥ ७० ॥

मान्दौ प्रेतकृतं रोगं प्रवदेन्मतिमान्नरः ॥ १/२ ॥

## बाधकस्थाननिरूपणम्

आरूढराशौ चर आयराशौ स्थिरे तु बाधा नवमे विचिन्त्या ।
तथोभये कामगृहे त्रयाणां केन्द्रेषु चैषामिति केचिदाहुः ॥ ७१ ॥

कुम्भश्चराणामलिचापसिंहस्त्रीणामलिर्गोवृषभस्य नक्रः ।
कुम्भस्य कर्की मिथुनस्य धन्वी मीनस्य चापं खलु बाधकं स्यात् ॥ ७२ ॥

बाधानिरूपणे पक्षास्त्रय इत्येषु गृह्यताम् ।
आदिमोऽन्त्यश्च सर्वत्र ग्राह्यो वा मध्यमः क्वचित् ॥ ७३ ॥

**दृष्टिबाधानिर्णयः**

बाधकाधिपतिर्लग्नं लग्नेशं वा यदीक्षते ।
त्रिदशादीक्षणेनापि बाधा स्याद् दृष्टिसम्भवा ॥ ७४ ॥

बाधकस्थानगेऽस्तेशे तद्द्वयाधिपयोर्मिथः ।
योगे दृष्टौ च वक्तव्या बाधा दृष्टिसमुद्भवा ॥ ७५ ॥

ज्यौतिषिको वनवासी व्यन्तरसुरसद्मगा विनिर्दिष्टाः ।
एते हि चतुःप्रकाराः ग्रहावलोकेन जायन्ते ॥ ७६ ॥

चरराशियुते लग्ने धरासुतयुते मदे ।
लग्ने सहितपापे च देवतादर्शनाद्रुजा ॥ ७७ ॥

शुभेतरयुते लग्ने सप्तमस्थे शनैश्चरे ।
चन्द्रे पापग्रहैर्दृष्टे पिशाचालोकनाद्रुजा ॥ ७८ ॥

लग्नेशबन्धुर्यदि बाधकेशो रन्तुं निहन्तुं यदि तस्य शत्रुः ।
भोक्तुं समश्चेद्ग्रहपीडनं स्यादेवं त्रिधा दैवविदो वदन्ति ॥ ७९ ॥

अन्ये तु लग्नेश्वरदृष्टयुक्ते रन्तुं निहन्तुं मृतिषष्ठपाभ्याम् ।
बाधाधिपेऽन्यैरिह भोक्तुमेवं ग्राह्यो विरोधे सति पूर्वपक्षः ॥ ८० ॥

शुक्रर्क्षगोऽथ तद्दृष्टो बाधकस्थानगो ग्रहः ।
यदि बाधोद्भवं विद्याद्भार्याभर्तृसमागमे ॥ ८१ ॥

**बाधासम्भवदेशः**

बाधासम्भवदेशस्तु बाधकस्थानराशिना ।
वाच्यो मेषादिराशीनां प्रदेशान् कथयाम्यतः ॥ ८२ ॥

मेषस्य धात्वाकररत्नभूमिः कुल्याप्रदेशो भुजगालयश्च ।
पूर्वप्रदेशो वृषभस्य पश्चात् कृषीवलक्षेत्रसुरम्यभूमिः ॥ ८३ ॥

उद्यानदेवालयनृत्तभूमीर्यमस्य रम्यं प्रवदन्ति तज्ज्ञाः ।
देवाङ्गनावासतटाकरम्यं जलान्तिकं कर्कटकस्य राशेः ॥ ८४ ॥

स्थानं मृगेन्द्रस्य तु तुङ्गदेशो गोक्षेत्रदेवद्विजवासभूमिः ।
देवालयाश्वद्विपमन्दिराब्धिक्षेत्रेषु वासो वनितागृहस्य ॥ ८५ ॥

जूकस्य वीथ्यापणकाननेषु कीटस्य वल्मीकतटाकयोश्च ।
आरामसेनागृहयुद्धभूमिसालेषु वासो नवमस्य राशेः ॥ ८६ ॥

नदीमुखारण्यनिषादवासेष्वेणस्य राशेर्घटभस्य तद्वत् ।
श्वभ्राम्बुपूर्णामरमन्दिरेषु झषस्य वासः कथितो मुनीन्द्रैः ॥ ८७ ॥

वनं क्षेत्रं पुरं कुल्या शैलग्रामापणाः क्रमात् ।
कूपकान्तारजलधितटाकसरितस्त्वजात् ॥ ८८ ॥

**वाग्दोषनिरूपणम्**

बाधकेश्वरदृष्टो वा युक्तो वा यदि वाक्पतिः ।
तर्हि रोगं वदेन्नृणां जिह्वादोषसमुद्भवम् ॥ ८९ ॥

**बालग्रहपीडानिरूपणम्**

बालग्रहाभिधा बाधन्तेऽर्भकानेव केवलम् ।
प्रसिद्धाः पूतनाद्या ये तत्पीडाथ निगद्यते ॥ ९० ॥

मन्दचन्द्रजयोरेको यद्वा मिथुननक्रयोः ।
बाधकस्थानसंस्थश्चेद्बालपीडां विनिर्दिशेत् ॥ ९१ ॥

**विषभोजननिरूपणम्**

मित्रे पुत्रे सप्तमे वाष्टमे वा मान्दौ वाहौ तिष्ठति क्ष्वेलभुक्तिः ।
तत्रस्थे चारीश्वरेऽरिप्रयुक्ता विज्ञातव्या सा न चेद्दैवयोगात् ॥ ९२ ॥

आरूढे सिंहराशौ कटुकरसयुते नागवल्लीदलाद्ये
भौमक्षेत्रे तथाऽज्ये मधुनि बुधगृहे तक्रदध्नोः सितर्क्षे ।
क्षीरे वा कादले वा विषममरगुरोर्धाम्नि निक्षिप्य दत्तं
पूपादौ मन्दगेहे लवणरसवति द्रव्य इन्दोर्द्रवे वा ॥ ९३ ॥

लग्नेशारीशसम्बन्धे हिंसायै गरलार्पणम् ।
लग्नेशास्तेशसम्बन्धे स्याद्वशीकरणाय तत् ॥ ९४ ॥

**रोगहेतुनिर्णयः**

दोषत्रितयसम्भूताः केवलं बाधया कृताः ।
द्वैविध्यमिति रोगाणां तद्भेदः प्राङ्निगद्यते ॥ ९५ ॥

आरूढे प्रबले वदन्ति सुधियो रोगोद्भवं बाधया
प्राग्लग्ने प्रबले तथामयगणा वाच्यास्त्रिदोषोद्भवाः ।
तद्वत्षष्ठपतौ बलिन्यपि गदान् बाधोद्भवान्निर्दिशेत्
रन्ध्रेशेऽतिबले त्रिदोषजनिता रोगाः स्युरेवं द्विधा ॥ ९६ ॥

व्याधीनामीश्वरो ज्ञेयः षष्ठपो रन्ध्रपस्तथा ।
बाधया सबलेऽरीशे रन्ध्रेशे रुक्त्रिदोषतः ॥ ९७ ॥

**शत्रुबाधानिरूपणम्**

बाधेशस्यारिभे वा रिपुभवनपतेर्बाधकर्क्षे यदि स्या-
द्योगो वा दर्शनं वा पुनरथ यदि वा तौ मिथः क्षेत्रसंस्थौ ।
बाधाधीशारिनाथावपि यदि सहितौ पश्यतोऽन्योन्यतो वा
शत्रोस्तत्राभिचारं वदतु बहुतया लक्षणानां स भूयान् ॥ ९८ ॥

महाभिचारो वक्तव्यः शुभश्चेद्बाधकाधिपः ।
पापश्चेत् क्षुद्र एष स्यादाभिचार इति द्विधा ॥ ९९ ॥

महाभिचार एष स्याद्वैरिभिर्मारणादिकम् ।
यत्कर्म क्रियते क्षुद्रो यत्कीलादि निखन्यते ॥ १०० ॥

रिपोश्च तन्नियोगाद्यो मारणादिकृदस्य च ।
जातिर्द्वयोश्च वक्तव्या तत्प्रकारोऽथ कथ्यते ॥ १०१ ॥

वर्णो यः षष्ठराशेः स भवति हि रिपोः षष्ठराशीशितुर्वा
वाच्यो बाधाख्यराशेरथ तदधिपतेर्वापि वर्णः प्रयोक्तुः ।
विप्रः स्यान्मीनराशिर्धरणिपतिरजो वैश्य उक्षा नृयुग्मं
शूद्रः स्यात् सत्रिकोणं पुनरिह विहगा एव विप्रादिनोक्ताः ॥ १०२ ॥

बाधकाधिपसम्बन्धो दृष्ट्या योगेन वा यदि ।
षष्ठभस्य रिपोर्वर्णं षष्ठराश्युदितं वदेत् ॥ १०३ ॥

बाधकस्थानतन्नाथयोगदृष्ट्यादयो यदि ।
षष्ठेशस्य रिपोर्वर्णस्तर्हि षष्ठाधिपोदितः ॥ १०४ ॥

षष्ठाधिपतिसम्बन्धो बाधकस्य गृहस्य चेत् ।
योगादिना प्रयोक्तुः स्याद्वर्णो बाधकभोदितः ॥ १०५ ॥

बाधकेशस्य चेत्षष्ठषष्ठेशेक्षान्वयादयः ।
बाधकाधिपतेर्वर्णं प्रयोक्तुस्तर्हि निर्दिशेत् ॥ १०६ ॥

## ब्राह्मणादिजातिचिन्तनम्

विप्रावसुरसुरेड्यौ भौमार्कौ क्षत्रियौ शशी वैश्यः ।
शूद्रस्तु बुधो मन्दश्चान्तरवर्णो वराहमिहिरमते ॥ १०७ ॥

विप्रोत्तमः स्याद्गुरुरत्र शुक्रो विप्राधमोऽन्यग्रहराशियोगात् ।
भेदोऽनयोः स्यादथ सार्वभौमो भानुः कुजो माण्डलिकश्च वेद्यः ॥ १०८ ॥

भूमिजोऽनुपवीती स्याद्राजतुल्योऽथ बोधनः ।
विद्वाननुपवीती स देवदास इतीर्यताम् ॥ १०९ ॥

उच्चादिनीचपर्यन्तस्थानभेदाच्छनेरपि ।
देवदासादिचण्डालपर्यन्ता जातयः स्मृताः ॥ ११० ॥

विप्राह्वयौ गुरुसितौ नृपती कुजार्कौ वैश्यः शशी शशिसुतो वृषलोऽर्कजोऽन्त्यः ॥ १/२ ॥

विप्रौ भृगुदेवगुरू क्षत्रियभावौ दिवाकरोर्वीजौ ।
वैश्यौ बुधचन्द्रमसौ शनैश्चरः शूद्रसङ्करकृत् ॥ १११ ॥

अर्कस्य शुक्रो राजा वा शूद्रो वा मण्डलाधिपः ।
इन्दोर्विप्रोऽथवा वैश्यो भौमस्य द्विजशूद्रकौ ॥ ११२ ॥

सौम्यस्य शूद्रो वैश्वो वा शनेः शूद्रोऽन्त्यजोऽपि वा ।
जीवस्य विप्रः शुक्रस्य शूद्रो विप्रोऽथवा स्त्रियः ॥ ११३ ॥

नीचारिमूढगैरेतैर्नीचजातिं विनिर्दिशेत् ॥ ११४ ॥

**शत्रुताहेतुचिन्तनम्**

शत्रुप्रयोक्तृवर्णोक्तावस्तिग्रन्थान्तरं च तत् ।
लिख्यते शत्रुताहेतुस्तत्रापि च मतान्तरम् ॥ ११५ ॥

षष्ठेशजातिं द्विषतोऽभिदध्यात् कर्मेशजातिं खलु कर्मकर्तुः ।
हेतुं च षष्ठेशसमाश्रितर्क्षनाथानुरूपं तमिहाभिधास्ये ॥ ११६ ॥

षष्ठेशो यदि भौमवेश्मनि बुधैर्हेतुर्महीत्युच्यते
बौधे काञ्चनमार्यभे पणफलान्यच्छस्य रूप्यं तथा ।
वासोधान्यचतुष्पदाश्च शनिभे चण्डालदासायुधं
चान्द्रे भाजनमम्बु वार्कभवने ताम्रं च मूलं फलम् ॥ ११७ ॥

लग्नादिकेषु भावेषु यत्रास्ते बाधकेश्वरः ।
भावमेनं निमित्तीकृत्याभिचारं विनिर्दिशेत् ॥ ११८ ॥

धात्वादिभखेटानामुदयेनारातिबाधकेशाभ्याम् ।
आश्रितभाभ्यामथवा धत्वाद्या हेतवश्चिन्त्याः ॥ ११९ ॥

शत्रुः पृच्छकसम्बन्धी वान्यो वा दूरगोऽपि वा ।
समीपस्थोऽथवेत्यादि तदन्विह विचिन्त्यते ॥ १२० ॥

**शत्रुचिन्तनम्**

शत्रुः स्यात् स्वजनश्चरे स्थिरगृहे लग्ने सुहृच्छात्रवो
द्वन्द्वे स्यादितरोऽथवा गृहपतौ षष्ठस्थिते बान्धवः ।
पुत्रेशे तनयादिकोऽथ मदपे भार्याथ धर्माधिपे
पित्राद्या गुरवो भवन्ति रिपवः शापोऽथवैषामिह ॥ १२१ ॥

सहवासी स्थिरे लग्ने द्वन्द्वगेऽन्तिकदेशगः ।
चरे दूरगतः शत्रुर्ज्ञेयः स्निग्धजनोऽथवा ॥ १२२ ॥

शत्रोर्दिग् रिपुनाथवैरिगृहयोरेकस्य वर्णोक्तवद्
बाधाराशितदीशयोरितरदिग्वाच्या प्रयोक्तुस्तथा ।
प्रागाद्येत्यमुनोदिता विहगदिक्प्रागादितो राशिदिक्
तासां दूरसमीपमध्यगतताजाद्याप्तभांशैस्तयोः ॥ १२३ ॥

**आभिचारलक्षणानि**

चरे विलग्ने रिपुनाथदृष्टे कुजे च लाभे स्थिरभे च धर्मे ।
द्वन्द्वेऽस्तराशौ प्रवदेन्नराणां रोगं रिपूणां कृतमाभिचारैः ॥ १२४ ॥

होरानाथयुते भौमे लग्नकेन्द्रगतेऽथवा ।
रिपुनाथे विलग्नस्थे चाभिचार उदीर्यताम् ॥ १२५ ॥

शत्रुस्थानाधिपे लग्ने कर्मण्यस्तङ्गतेऽथवा ।
लग्ने भौमयुते दृष्टे वाऽभिचार उदीर्यताम् ॥ १२६ ॥

सुखभावगते केतौ कर्मलग्नगतेऽथवा ।
लग्ने भौमयुते दृष्टे वाभिचार उदीर्यताम् ॥ १२७ ॥

सुखभावगते केतौ कर्मलग्नगतेऽथवा ।
केन्द्रे मान्दिसमायुक्ते रोगः क्षुद्राभिचारजः ॥ १२८ ॥

उदयारूढचन्द्राणां गुळिके केन्द्रसंस्थिते ।
मन्दयुक्तेऽथ दृष्टे वा क्षुद्रं रिपुकृतं वदेत् ॥ १२९ ॥

लग्नात्केन्द्रगयोररीशकुजयोर्बाधाख्यभावादपि
व्याधिं शत्रुभिराभिचारजनितं विद्वान्वदेद्रोगिणाम् ।
केतौ कण्टकसंस्थिते च गुलिके क्षुद्राभिचाराद्वदं
मान्दौ केन्द्रगते तृतीयभवने राहौ विषान्नाशनात् ॥ १३० ॥

**क्षुद्रस्थितदेशज्ञानम्**

मान्दिश्चतुर्थराशौ वा चतुर्थांशेऽथवा स्थितः ।
यदि क्षुद्रं गृहे वाच्यं जलराश्यंशयोर्जले ॥ १३१ ॥

वर्गोत्तमांशगे तस्मिन्नुभयत्र वदेदिदम् ।
मन्देन मान्दिना वापि युक्तेऽह्रौ सर्पसन्निधौ ॥ १३२ ॥

तत्केन्द्रे चेद्रविर्वृक्षे केदारे भूमिजो यदि ।
जीवशचेद् गृह एव स्याच्छुक्रश्चेच्छयनालये ॥ १३३ ॥

मन्दश्चेन्मलमूत्रादिपरिहारोचितावनौ ।
मान्दिर्मेषत्रिकोणस्थस्तदंशस्थोऽथवा यदि ॥ १३४ ॥

शिरःकपाले निहितं व्याघ्रस्याखुभुजोऽथवा ।
गोत्रिकोणे घटे वाच्यं वंशादौ मिथनस्य चेत् ॥ १३५ ॥

कर्किंत्रिकोणसंस्थश्चेत्कपाले निहितं च तत् ।
मान्दौ संहारनक्षत्रस्थिते वाच्याऽहिपुत्रिका ॥ १३६ ॥

कीटराशिस्थिते यन्त्रं चतुरङ्घ्र्यंशकोऽस्थि च ।
एषां सङ्ख्या तु विज्ञेया मान्दिभुक्तांशकैः समा ॥ १३७ ॥

मान्दिराश्यंशयोर्या दिग्दिशं तामत्र निर्दिशेत् ।
एवं हि सम्प्रदायोऽत्र कश्चिदन्योऽथ कथ्यते ॥ १३८ ॥

ऊर्ध्वास्ये बाधकाधीशे निहितं भूरुहोपरि ।
निखातं कावधोवक्त्रे तिर्यग्वदनगः स चेत् ॥ १३९ ॥

पाषाणद्रुममध्यादिन्यस्तं चूर्णादिकं वदेत् ।
बाधेशतत्स्थराशिभ्यां द्रुमतत्स्थप्रदेशयोः ॥ १४० ॥

शुभोऽशुभर्क्ष इत्येतेनोह्या चोत्तमनीचता ।
बाधकाधिपतिः स्वांशान्नवांशे यावति स्थितः ॥ १४१ ॥

तत्सङ्ख्याः स्युर्द्रुमास्तत्र मध्यगांशकपोदिताः ।
तेषु बाधेशवृक्षे वा समीपे वास्य तत्स्थितम् ॥ १४२ ॥

बाधेशे जलराशिस्थे सिन्धुनद्यादिकूलगम् ।
जले क्षिप्तं निखातं वा वाच्यमूर्ध्वाननादिभिः ॥ १४३ ॥

अर्के वार्केण युक्ते वा बाधेशे देवसन्निधौ ।
चन्द्रे चन्द्रान्विते तोयप्रदेशे वाऽथ सोषरे ॥ १४४ ॥

कुजे वा कुजयुक्ते वा श्मशाने वाऽग्निसन्निधौ ।
युद्धोर्व्यां वैवमाद्येषु शशिजे वाऽथ तद्युते ॥ १४५ ॥

विद्याभ्यासविहारोर्व्यामथ जीवे च तद्युते ।
देशान्ते कोशगेहे वा ततः शुक्रे च तद्युते ॥ १४६ ॥

शय्यागृहे वा ग्रामान्ते ततो मन्दे च तद्युते ।
उच्छिष्टादिपरित्यागस्थाने चूर्णादिकं स्थितम् ॥ १४७ ॥

युक्ते तस्मिन् राहुकेतुगुलिकैः सर्पसन्निधौ ।
दिगत्र रिपुनाथस्य वाच्या वा बाधकेशितुः ॥ १४८ ॥

बाधकाधिपसंयुक्तराशेरप्यंशकस्य वा ॥ १/२ ॥

अयत्नोद्धार्यमेव स्याद्बाधेशे चरराशिगे ।
उभयस्थे प्रयत्नेन नोद्धार्यं तत्स्थिरस्थिते ॥ १४९ ॥

क्षुद्रं तत्स्थितिदेशं चैवं ज्ञात्वा तदुक्तविधिना तत् ।
त्यक्त्वा रक्ष्यं स्थलमथ महाभिचारप्रतिक्रियां वक्ष्ये ॥ १५० ॥

## आभिचारप्रतिक्रियानिरूपणम्

युक्त्वा षष्ठपतिं विलग्नपतिना यो राशिरत्रागतः
सादित्यान्वितवीक्षितो यदि बलिं कुर्यादघोराह्वयम् ।
कार्यं चन्द्रमसा कपालहवनं स्याच्चक्रहोमं विदा
कर्तव्यं प्रतिकारकर्म गुरुणा प्रोक्तं तदेवार्किणा ॥ १५१ ॥

भूमिजेक्षितयुतेऽथ योगभे भूतमारणबलिर्विधीयताम् ।
खड्गरावणबलिं करोतु वा कृत्तिकाबलिमथातनोतु वा ॥ १५२ ॥

शुक्रान्वितेक्षिते योगे प्रतिकारबलिक्रियाम् ।
करोतु शान्तये व्याधेर्बलिं वा भूतमारणम् ॥ १५३ ॥

अथवा दशमेनैव राशिना तद्गतेन वा ।
तद्द्रष्ट्रा वा विहङ्गेन विधीयन्तामिमाः क्रिया ॥ १५४ ॥

## बाधामूर्तिचिन्तनम्

बाधकगततन्नाथग्रहतो ज्ञेया हि देवताभेदाः ।
तदधिष्ठितराश्यंशैरविभेदः स्यात्स कथ्यते तदनु ॥ १५५ ॥

सौम्यर्क्षांशकयोः स्थितो यदि भवेद्बाधाधिपः स्वालये
संस्थाप्यान्वहमर्चितोत्तमजनैर्बाधाकरी देवता ।
जीवर्क्षांशगयोः सुरालयगता मन्दे तु नीचार्चिता
भीमोद्याननिवासिनी स यदि चेत् स्वांशेऽथवा स्वालये ॥ १५६ ॥

दिवाकीर्त्यर्चिता वाच्या चामुण्डी सहकेतुना ।
पञ्चमी बुधयुक्तेन तत्क्षेत्रस्थेन चासृजा ॥ १५७ ॥

भौमेन भैरवो घण्टाकर्ण इत्यादयः स्मृताः ।
वाच्या रक्तेश्वरी रक्तचामुण्ड्यतिभयङ्करी ॥ १५८ ॥

काली चेत्यादयस्त्वोजयुग्मराश्यंशभेदतः ।
ओजयुग्मत्वभेदे तु भांशयोर्द्विविधा अपि ॥ १५९ ॥

मेषाद्याश्रयभेदान्मूर्तिविशेषा दिवाकरादीनाम् ।
कथ्यन्ते संक्षेपादिह खल्वन्यत्र विस्तरेणोक्ताः ॥ १६० ॥

## रविणा बाधामूर्तिचिन्तनम्

भौमक्षेत्रगतो रविस्त्रिणयनः कीटे स्वयम्भूरजे
मर्त्यैरुच्चत ऊर्ध्वमत्र तदधो देवैः प्रतिष्ठापितः ।
यक्षी गोगत एष जूकगृहतः काली पुनः स्त्रीगतः
श्रीरामाद्यवतारविष्णुरथ विष्णुस्त्वेष वीणागतः ॥ १६१ ॥

धर्मदैवं च नागाश्च भास्करः कर्कटस्थितः ।
सिंहस्थो देवता सा या पूज्यते नित्यमात्मना ॥ १६२ ॥

गन्धर्वयक्षौ धनुषि स्थितोऽर्कस्तयोस्त्रियौ मीनगतस्तु भानुः ।
शास्ता पिशाचो मृगयाप्रधानः किरातमूर्तिश्च शनेर्गृहस्थः ॥ १६३ ॥

## चन्द्रेण बाधामूर्तिचिन्तनम्

चामुण्डी सुरसद्मगाजगशशी नीचार्चिता कीटग-
श्चामुण्डी यदि मेषगः स विबलो वाच्ये उभे ते अपि ।
यक्षी शुक्रगृहस्थितः शिशिरगुर्वा धर्मदैवं बुध-
क्षेत्रस्थस्तु विमानसुन्दर उत स्त्री वास्य पुंस्त्रीवशात् ॥ १६४ ॥

स्वगृहस्थः शशी नागो धर्मदैवं बली स चेत् ।
सिंहराशिस्थितश्चन्द्रो भगवत्यन्यपूजिता ॥ १६५ ॥

चापस्थो व्योमगन्धर्वस्तत्स्त्री मीनगतः शशी ।
प्रेतशूलपिशाचाद्याः शशी मन्दगृहस्थितः ॥ १६६ ॥

**कुजेन बाधामूर्तिचिन्तनम्**

स्याद्भूतराक्षसो ब्रह्मराक्षसो नरभोजिनी ।
बालप्रभक्षिणीत्याद्याः स्वर्क्षस्थः क्षितिनन्दनः ॥ १६७ ॥

भौमो भैरवयक्ष एतदबला शौक्रेऽथ बौधे स्थितो
गन्धर्वो रतिकाम इत्ययमथो यक्षी च रुष्टो हरिः ।
कर्किस्थः परदेवता भगवती वा कृष्णचामुण्ड्यसृक्-
सिंहस्थो वनदेवताश्च शिवभूतौघाश्च रुष्टः शिवः ॥ १६८ ॥

धनुर्झषस्थः खलु कुक्षिशास्ता स वीरभद्रोऽथ मृगे च कुम्भे ।
निजोत्सवध्वंसनरुष्टदेवः पराभिचारोद्भवदेवता च ॥ १६९ ॥

**बुधेन बाधामूर्तिचिन्तनम्**

भौमक्षेत्रबुधो ज्वरो भृगुगृहे गन्धर्व एष स्वभे
गन्धर्वोऽपि च किन्नरोऽथ हिमगोरम्भःपिशाचो गृहे ।
सिंहे पन्नगकन्यका गुरुगृहे रुष्टद्विजप्रेरिता
चामुण्डी कवची पिशाचयुगमाघाताश्रितं मन्दभे ॥ १७० ॥

**गुरुणा बाधामूर्तिचिन्तनम्**

भौमर्क्षे कुपितेशभूतनिवहो दुर्देवता चाभिचा-
रोत्था भूमिसुरस्य भार्गवगृहे यक्षी च यक्षोऽप्युभौ ।
तीव्रापस्मृतिदौ गुरुर्बुधगृहे क्लीबात्मिका देवता
विप्राणामपि चाभिचारजनिता वा देवकोपोद्भवा ॥ १७१ ॥

तुङ्गस्थः खलु देवताग्निगृहगा गन्धर्वमुख्यस्तथा
सिंहस्थो नृपसेवकैरिह नृणामुद्दिश्य कान्तं स्त्रिया ।
नारीणां च कृताभिचारजनिता दुर्देवता वाक्पति-
र्भस्माप्सङ्गिपिशाचकावधमगन्धर्वः शनेर्न स्वभे ॥ १७२ ॥

**शुक्रेण बाधामूर्तिचिन्तनम्**

भौमक्षेत्रभृगुस्तु जीववदजे यक्षस्तथा राक्षसः
स्वर्क्षे कर्कटके च यक्षसहिता यक्षी बुधर्क्षे पुनः ।

विद्याभ्यासभवाभिचार इनभे यक्षी सुरक्षेत्रगा
चापे ब्राह्मणशाप एव झषभे दुर्गा भवेद्भार्गवः ॥ १७३ ॥

मन्दक्षेत्रगतः शुक्रः स्यादपस्मारदेवता ।
वात्याप्रभृतयः कालपिशाचश्चात्र बाधकः ॥ १७४ ॥

**शनिना बाधामूर्तिचिन्तनम्**

असाध्यापस्मृतिर्मेषे कीटे प्राग्जन्मपीडितः ।
शिवालयस्थस्तद्भूतो वक्तव्यो भानुनन्दनः ॥ १७५ ॥

गव्यपस्मारयक्षस्तद्यक्षीशापो द्विजस्य च ।
जूके शास्त्रादिभूतेशाः क्रुद्धा महविघाततः ॥ १७६ ॥

बौधे काननदेवता शनिरपि प्रेतः सुहृत्प्रेषितो
दैवं नीचसमर्पितं शशिगृहे सिंहे सुरावासगः ।
शास्ताऽखेटपिशाचकश्च गुरुभे गन्धर्वभेदो मणी-
सङ्घातार्तवविश्रुतोऽथ निजभे प्रेतः पिशाचाद्यपि ॥ १७७ ॥

**व्याधिशान्तिनिरूपणम्**

दोषस्य दृष्ट्वा गुरुलाघवं यथा भिषक्चिकित्सेत रुजां विधानवत् ।
तथैव दोषस्य बलाबलत्वं विचिन्त्य वाच्यं परिहारकं च ॥ १७८ ॥

बाधारूढाल्लग्नतो व्याधिशान्तिश्चिन्त्याऽऽरूढे पापयोगेक्षणाद्यैः ।
दोषैर्युक्ते व्याधिवृद्धिर्गताधः प्राग्लग्ने सा भाविनी पृच्छकानाम् ॥ १७९ ॥

भाग्यस्थानगते शुभे तदधिपे प्राणिन्यभीष्टस्थिते
लग्नेशे तपनेन वाथ धिषणेनालोकिते वान्विते ।
स्यादेवेश्वरसेवया गदशमस्तद्वन्मनूनां जपै-
र्लग्नेशे नवमे च दोषसहिते व्याधेः शमो दुर्लभः ॥ १८० ॥

पृष्ठोदयजलह्रासचराधोमुखराशिभिः ।
लग्नस्थैर्व्याधिशान्तिः स्यात्तत्प्रश्ने न तदन्यथा ॥ १८१ ॥

षष्ठाष्टमव्ययसुखे पापविमुक्ते शुभान्विते केन्द्रे ।
व्याधेः शान्तिः प्रश्ने शान्तिर्भवतीति निर्दिशेन्मतिमान् ॥ १८२ ॥

बाधकखेटाधिष्ठितभांशवशात् प्रतिक्रियाकरणविधौ ।
कर्तृविशेषो ग्रन्थान्तरगदितो निगद्यते तदनु ॥ १८३ ॥

बाधकविहगाधिश्रितभवनांशकयोर्निरीक्ष्य सत्त्वादिगुणान् ।
सात्त्विकराजसतामसकर्मास्त्वेतत्प्रतिक्रियाकर्ता ॥ १८४ ॥

सूर्याचन्द्रमसोर्गृहांशकगतश्चेत् खेचरो बाधको
विप्रः कर्म करोतु निर्जरगुरोश्चेद्देवतागायकः ।
ज्ञस्य स्याद्यदि कुम्भकृत्प्रभृतयः शुक्रारयोर्वा शने-
श्चण्डालोत्तममध्यमौ तदधमस्तद्देवताप्रीतये ॥ १८५ ॥

मान्दित्रिकोणयोगेक्षाद्येतस्य यदि पुल्कसः ।
दिवाकीर्तिस्तथा केतुबाधकग्रहयोगतः ॥ १८६ ॥

सौम्ये सौम्यगृहस्थे बाधेशे तत्प्रतिक्रिया विप्रैः ।
पापे तद्गृहगे वा चण्डालाद्यैरितीरितं कैश्चित् ॥ १८७ ॥

चिकित्सा तु कृता केन रोगशान्त्यै भवेदिति ।
प्रश्नोऽपि शमनप्रश्नवत्स्यात् कर्मात्र शक्तिमत् ॥ १८८ ॥

मृत्युञ्जयगणपतिहोमादीनां कर्तृचिन्तने धिषणः ।
अनुकूलो जलवृद्धिर्दशमगुणश्चास्तु लग्नमूर्ध्वमुखम् ॥ १८९ ॥

**॥ इति प्रश्नानुक्रमे द्वादशोऽध्यायः ॥**

* * *

## ।। अथ त्रयोदशोऽध्यायः ।।

**ग्रहवयोज्ञानम्**

लग्नेशे क्षितिजे च बालहिमगौ नो पञ्चसंवत्सराः
पूर्णाः प्रष्टुरथेन्दुजेष्ट भृगुजे षट्संयुता वा दश ।
त्रिंशद्देवगुरौ रवौ दशगुणाः शैलाश्च वृद्धोडुपे
प्रष्टावृद्धतरोऽर्कजे फणिनि वा चैषां तथैवोदये ।। १ ।।

**बन्धनयोगः**

सूर्यात्सप्तमधर्मधीष्वशुभभे पापौ पितुर्बन्धदौ
कार्यादावृणतश्च बन्धनमिनप्राबल्यदौर्बल्यतः ।
सूर्यस्थर्क्षवशाच्च दूरसविधाद्यूह्यं नवांशैरपि
स्याद्योगोऽयमिदं स्वकारकवशाद्योज्यं सुतादिष्वपि ।। २ ।।

कृत्वा लग्नं रवेः स्थाने प्रष्टुर्बन्धोऽत्र कथ्यताम् ।
लग्ने चरस्थिरद्वन्द्वे बन्धो दूरान्तिकाध्वसु ।। ३ ।।

व्ययधनसुतधर्मगैरसौम्यैर्भवनसमाननिबन्धना विकल्प्या ।
भुजगनिगलपाशभृद्दृगाणैर्बलवदसौम्यनिरीक्षितैश्च तद्वत् ।। ४ ।।

वेश्याहेतुर्ऋणेन वा व्ययगते पापे धनस्थे पुन-
र्बन्धो राजकृतोऽस्य दूषणवशात् पुत्रस्थिते कथ्यताम् ।
तद्धेतुर्नवमस्थिते पितृनिमित्तोऽयं यथा बध्यते
मेषादिः खलु लग्नगो भुवि तथा पाशादिभिः पृच्छकः ।। ५ ।।

सौरद्रेक्काणे वा भुजङ्गपरिवेष्टितेऽथवा लग्ने ।
शशिसौराभ्यां दृष्टे बन्धनमिह वाच्यमादेशे ।। ६ ।।

पापक्षेत्रेषु यमे त्रिकोणचतुरश्रसप्तमेषु गते ।
क्रूरैर्निरीक्ष्यमाणे बन्धोऽस्तीत्यादिशेत् क्षिप्रम् ।। ७ ।।

अचिरेण चरे मोक्षः स्थिरभे मोक्षस्तु दिर्घकालेन ।
द्विशरीरगते सौरे मध्यमकालेन मोक्षः स्यात् ।। ८ ।।

### ग्रहाणां फलभेदः

भौमो रोगं कुरुते भोगं शुक्रस्त्वरोगतां सौम्यः ।
सौरो मरणं दिनकृन्नाशं चिरजीवनं जीवः ॥ ९ ॥
द्यूनस्थौ कुजभानुजौ खलु रुजे स्यातां तयोः कस्यचि-
द्योगोऽन्यस्य मदस्थितिश्च मृतये रिःफार्थसंस्थौ च तौ ।
पापाः स्युश्चतुरश्रगाश्च मृतिदाः प्रोक्तं त्विदं चिन्तनं
भावानां तदधीशकारकविहङ्गानां त्रयाणामपि ॥ १० ॥

### स्त्रीकलहचिन्तनम्

चन्द्रे पापयुतेऽथवा भृगुसुते कामेऽथवा वेश्मनि
स्त्रीभिः स्यात्कलहोऽथ बन्धुकलहः पापे भवेद्बन्धुगे ।
मातृक्लेशकरोऽशुभोऽस्तसुखगः सौम्येऽस्तगे बन्धुगः
पापश्चेदबलावशात्स्वजननीं प्रष्टाधिकं पीडयेत् ॥ ११ ॥

### सामाद्युपायचिन्तनम्

साम्नो जीवः स भृगुतनयो दण्डनाथौ कुजार्कौ
दानस्येन्दुः शिखियमबुधाः सासुरा भेदनाथाः ।
वीर्योपेतैरुपचयगतैर्लग्नगैः केन्द्रगैर्वा
तत्तत्सिद्धिं व्रजति तदहस्वंशके वापि तेषाम् ॥ १२ ॥

### निधिचिन्तनम्

यदि कण्टकवर्तिनः शुभाः स्युर्यदि वैकादशवेश्मगा विलग्नात् ।
धनवद्ग्रहमादिशेत्तदानीं द्वारं च स्वदिशि परं वदेद्विधिज्ञः ॥ १३ ॥

प्राच्यादीत्युदितेन यत्र विधिना गेहस्य भागे भवेत्
सौम्यः कण्टकलाभगोऽत्र निहितं तस्योदितं तद्धनम् ।
स्वोच्चस्थो यदि भूरिवैरिगृहनीचस्थः स चेत्तल्लघु
क्रूराधिष्ठितगेहभागनिहितं वाच्यं च शल्यादिकम् ॥ १४ ॥

### ग्रहवशाल्लक्षणचिन्तनम्

भानुः कौसुम्भवासाः सितवसनधरो ग्लौरसृग्रक्तवासाः
पालाशाच्छादनो ज्ञो वसनमथ गुरोः पीतमच्छस्य चित्रम् ।

कोणः कृष्णाम्बरः स्यादथ कथयतु तैर्लक्षणं केन्द्रसंस्थै-
रायस्थैर्वा स्ववासोधरयुवतिनृणामागमं प्रश्नकाले ॥ १५ ॥

प्रस्थानलग्नास्तगतैर्बलिष्ठैः केन्द्रस्थितैर्वा विहगोदितानाम् ।
विप्रादिनारीनरवस्त्रभाजामभ्यागमो वर्त्मनि कीर्तनीयः ॥ १६ ॥

मार्तण्डो व्रणवान् व्रणी धरणिजो वाचस्पतिः काचदृक्
मन्दो वामपदे व्रणाङ्कसहितः पार्श्वे तिलाङ्को भृगुः ।
चन्द्रो माषतिलादिलाञ्छनयुतः सौम्यः सिरासन्ततो
योज्यं प्राक्तनलक्ष्मणोर्वरकळत्रादेश्च लक्ष्मण्यदः ॥ १७ ॥

संहारोडुगतोऽर्कजः क्षितिभुवा युक्तोऽथवा वीक्षितः
प्रष्टुर्मन्दिरदाहकृत्स शिखिना युक्तेक्षितो वा तथा ।
संहारोडुगतोऽसदीक्षितयुतो लग्नाधिपः कुष्ठका-
र्येवं राहुयुतेक्षिते तु तनुपे प्रष्टाऽहिदष्टो भवेत् ॥ १८ ॥

भानोर्लग्ने पशुगजतुरङ्गादिकानां विनाशः
कीटोत्थापत्तपनबुधयोर्मृत्युभीतिः कुजस्य ।
इन्दोः सूनोर्विपदिहसुहृत्पुत्रयोः कीर्तनीया
नीचारिस्था रविहतकरा ये फलं प्रोक्तमेषाम् ॥ १९ ॥

स्वोच्चस्थितो देवगुरुर्भृगुर्वा चन्द्रेण युक्तो यदि लग्नसंस्थः ।
प्रीतिर्भवेदेव जनात्समस्तात् पक्षेण लाभश्च चतुष्पदानाम् ॥ २० ॥

**गजलाभचिन्तनम्**

लग्नद्यूनतपस्सुतेषु धिषणः पाथोनराश्यंशगः
प्रश्ने कुञ्जरलाभकृन्नरपतेस्तत्रायनाथो यदि ।
नाथः संश्चतुरङ्घ्रिभस्य नियतं केन्द्रत्रिकोणाश्रितः
शीघ्रं तत्खलु केन्द्रगौ यदि तदा कर्मेशभाग्याधिपौ ॥ २१ ॥

**मान्दियोगफलानि**

भानौ मान्दियुतेक्षिते निजगृहे कस्यापि पुंसो रुजा
कोपो वा नृपतेस्तदीय पुरुषस्यान्यायतो वागमः ।

शीतांशौ कलहो भवेदबलयोः स्त्रीहेतुकः सोऽथवा
यः कश्चित्कलहोऽथवा पुनरिह श्रूयेत दूरादपि ॥ २२ ॥

भूपुत्रे कलहो भवेत्परिसरे श्वद्वीपिनोर्नायकै-
रन्योन्यं यदि वा शवोपनयनं यद्वाथ मांसागमः ।
शीतांशोस्तनये तु नूतनघटानीतिः प्रधानागमो
यद्वा नूतनलोहजाद्युपगमो वा विग्रहः पुंस्त्रियोः ॥ २३ ॥

जीवे भूमिरुहः पतेद्यदि चरे भग्नः समूलं स्थिरे
मध्ये यद्युभये तदीयविटपस्तत्स्याज्झषे वा हये ।
आयानं विमनोद्विजस्य यदि वा यद्वात्र पक्वागमो
यद्वापन्निजपूर्वहेतुरथवा तेषां नु शेषक्रिया ॥ २४ ॥

शुक्रे छेदनमाखुनाथ भविता वस्त्रस्य पात्रक्षति-
र्दध्नो वा पयसोऽथवोपनयनं विप्रागमोऽन्यायतः ।
गृह्णीयात्पुनरोतुराखुमथवा पादायुधं वाग्रतो
मन्दे कश्चन दीक्षितो गृहमुपेत्याथो रुषा यास्यति ॥ २५ ॥

चण्डालस्य मृतिःस्थले तु निजके तद्विग्रहो वाऽयस-
द्रव्याणामथवा हृतिः पुनरहौ श्वव्याघ्रयोर्विग्रहः ।
यद्वा पन्नगदंशनं फणियुगानीतिश्च तत्राथवा
दुग्धस्योपनयो वदेदिति सुधीः केतोः फलं राहुवत् ॥ २६ ॥

## पितृकर्मविचारः

स्वांशे राशौ चरे वा स्थितिरिननवमाधीशयोरेनयोश्चे-
दृष्टी रिःफे स्थितिर्वा यदि तदुपगतांशर्क्षयोः केन्द्रगत्वम् ।
सम्यग्दीक्षा पितुः स्याद्यदि कथितगुणेष्वेषु नैकोऽपि दीक्षा
नैव स्यात्सम्भवेच्चेदपि बहुविपदः सम्भवेयुर्गदाद्याः ॥ २७ ॥

धर्मेऽस्ति पापान्वयवीक्षणं चेद्दीक्षा विहन्येत शुभासतोश्चेत् ।
अग्रे शुभश्चेद्विहतिस्तु मध्ये पृष्ठे स चेत्तां परतो लभेत ॥ २७ ॥

मातृदीक्षाविचारे तु धर्मधर्मेशभास्वताम् ।
प्रोक्तस्थानेष्विह ग्राह्याश्चतुर्थैतत्पतीन्दवः ॥ २९ ॥

जातो यः पितृजन्मरन्ध्रभवने यल्लग्नगस्तत्पतिः
कुर्यातां पितृकर्म तौ पितृमृतीशोडुत्रये यः पुनः ।
जातः सात्मजपौत्रयुक्च विधिना कुर्याच्च दीक्षां पितु-
र्जातो व्योम्नि पितुः समस्तदधिपे लग्नस्थिते चाधिकः ॥ ३० ॥

यस्य स्यात्पितृजन्मतोऽत्र नवमो लाभो द्वितीयोऽथवा
चन्द्राधिष्ठितराशिरेष सततं तातानुवर्ती भवेत् ।
यस्य स्यात्पितृजन्मभं स्वजनिभाल्लाभे त्रिकोणेऽथवा
लग्नेशाश्रितभाल्लभेत सकलं वित्तं स पित्रार्जितम् ॥ ३१ ॥

लग्नेन्दुभ्यां पितृगृहपतिः स्वस्वलग्नायगश्चेत्
प्रीतिं कुर्यात्पितुरिह तु शुश्रूषया दीक्षया च ।
लग्नाधीशो नवमपतिना भानुना वा समेतो
भाग्यस्थो वा यदि जनकवद्वृत्तिविद्याद्युपेतः ॥ ३२ ॥

जातो यः पितृजन्मरिःफपतिनक्षत्रेषु कुर्यात्पितु-
र्दुःखं दूरगमादिभिः स सततं वैरी भवेद्वैरिभे ।
यद्रिःफाधिपसंयुतः खलु पितुर्जन्माधिपो यस्य वा
रिःफस्थः स च तावुभौ पुनर्ऋणं नूनं लभेतां पितुः ॥ ३३ ॥

भावश्चेन्नवमश्चरे तदधिपो वाऽयं व्यये चाष्टमे
भानुर्वैवमिह स्थितिर्न सविधे तातस्य मृत्यौ भवेत् ।
मार्गे स्यान्मरणश्रुतिर्द्वितनुभे स्थानं स्थिरे सन्निधौ
सत्स्वामीक्षितसंयुते नवमभे नाथेऽस्य चार्के तथा ॥ ३४ ॥

## कृतयुगादिराशिचिन्तनम्

नृणामायुः सहस्रं कृतयुगसमये तद्दलं तस्य चार्धं
त्रेतायां द्वापरे वा कलियुग उदितः स्यात्सहस्राष्टभागः।
पूर्णार्धाङ्घ्र्यष्टभागान् निजनिजशरदां तत्तदाख्यालयांशा-
रूढाः खेटाः प्रदद्युस्त्वजमुखभचतुष्कत्रिकोणाः कृताद्याः ॥ ३५ ॥

यज्जननं कृतयुगभे दैवनियोगादुपेत्य सकलजनाः ।
धनमस्मै दद्युरथ त्रेतायामर्थलब्धिरटनेन ॥ ३६ ॥

द्वापरभे स्वीयधनव्यापारात् कलियुगे न केनापि ।
एवं फलदा विहगाः कृतपूर्वयुगाभिधानराशिगताः ॥ ३७ ॥

स्वदशापहृतिप्रभृतिषु समयेष्विह चिन्त्यतां तदंशोऽपि ॥ १/२ ॥

**॥ इति प्रश्नानुक्रमे त्रयोदशोऽध्यायः ॥**

* * *

# ॥ अथ चतुर्दशोऽध्यायः ॥

## देवप्रश्नानुक्रमः

दैवज्ञेन समाहितेन समयो देशः स्ववायुर्दशा
प्रष्टुः स्पर्शनमाश्रितर्क्षहरितौ प्रश्नाक्षराणि स्थितिः ।
चेष्टाभावविलोकने च वसनाद्यन्यच्च तत्कालजं
पृच्छायाः समये तदेतदखिलं ज्ञेयं हि वक्तुं फलम् ॥ १ ॥

पृच्छानिर्गममार्गमन्दिरगतिः प्रश्नक्रियासम्भवं
सूत्रं त्रिस्फुटजं चतुःस्फुटफलं पञ्चस्फुटं च क्रमात् ।
प्राणादित्रयमष्टमङ्गलफलं दीपं च कार्तस्वरं
सान्निध्यादिसमस्तभावजफलं प्रश्ने वदेद्दैविके ॥ २ ॥

अतीतफलमारूढादुदयादागमं फलम् ।
छत्रेण वर्तमानं स्यात्त्रिकालफलमुच्यते ॥ ३ ॥

**समयनिरूपणम्**

देवदेवेशगोमासतारेष्वष्टमशीतगौ ।
देवप्रश्नमनिष्टाय भवेदाचारवित्तथा ॥ ४ ॥

बालान्नवर्ज्यतारासु नैवेद्यदोषमादिशेत् ।
गण्डान्तेषूपदेवानामुष्णेऽग्न्यापीडनं वदेत् ॥ ५ ॥

विषे डुण्डुभवेषः स्यादष्टम्यामरिपीडनम् ।
कृष्णपक्षेऽतिदोषः स्याद् विष्ट्यां धान्यक्षयस्तथा ॥ ६ ॥

रिक्तायां शत्रुणा नित्यकर्मलोपं विनिर्दिशेत् ।
करणे तु स्थिरे दुष्टगृध्रादिगृहवेशनम् ॥ ७ ॥

तिथिनक्षत्रराश्यंशसन्धौ पीठाच्च्युतिं वदेत् ।
गुळिके प्रेतबाधा स्याच्चक्रार्धे पदनाशनम्
ग्रहणे चेतनादोषं गेहदोषोऽहिमस्तके ॥ ८ ॥

एकार्गले दुर्मृतिः स्यान्मृत्युदग्धादिषु क्रमात् ।
मृत्युदग्धादयः पापयोगदृष्ट्या रिपूदयम् ॥ ९ ॥

प्रदोषे चेत् तनुभ्रंशं निशीथे चेतनाक्षयम् ।
सन्ध्यायामन्यमन्त्रादिप्रयोगं चूर्णसङ्क्रमम् ॥ १० ॥

सङ्क्रान्तावन्यदेवेशमन्त्रपूजां विनिर्दिशेत् ॥ १/२ ॥

देशनिरूपणम्

पृच्छादेशस्वभावस्तु देवस्थानं भवेद्ध्रुवम् ।
पञ्चेन्द्रियमनःप्रीतिकरो देशः शुभावहः ॥ ११ ॥

शरनिरूपणम्

देवेन देवो दूतेन देवतायतनं क्रमात् ।
विचिन्त्यतां तदैक्येन देवसान्निध्यमुच्यते ॥ १२ ॥

सान्निध्यादिशुभं वाच्यं दूते यस्मिन् समारुते ।
अन्यथा शुद्धिरादेश्या देवप्रश्ने विशेषतः ॥ १३ ॥

शुक्लपक्षशुभवासरेष्विडा सिद्धिदान्यदिवसेषु पिङ्गला ।
तत्र दूतसहिता यदीर्यतां पुष्कलोऽखिलकलाभिरीश्वरः ॥ १४ ॥

हरित्

दूतेक्षणेन वा दूतस्थित्या मेषादिराशिषु ।
देवागमं च नगरे देवस्थानं वदेद्बुधः ॥ १५ ॥

प्रश्नाक्षरचिन्ता

प्रश्नवाक्यं स्वराद्यं चेत् सान्निध्यशुभवृद्धिकृत् ।
वर्गं त्वशुद्धिदं चार्थनाशामयव्ययादिकम् ॥ १६ ॥

खरश्चातिखरस्तद्वन्मृदुर्घोषोऽनुनासिकः ।
पञ्चानामपि वर्गाणां पञ्चवर्णाः प्रकीर्तिताः ॥ १७ ॥

गुरुभौमसिताः सौम्यशनी तेषां हि देवताः ।
अचां रविर्यकारादिदशकस्य शशी स्मृतः ॥ १८ ॥

दूतोक्ताद्यक्षरेशेन देवसान्निध्यमुच्यताम् ।
शुभं शुभेक्षणं पापयुतिवीक्षादयोऽन्यथा ॥ १९ ॥

सर्वगुरावधिकधनस्यागमनं चोत्सवादिघोषं च ।
अखिललघौ सान्निध्यं निवेद्यपुष्टिं विनिर्दिशेन्मतिमान् ॥ २० ॥

देवप्रश्नाक्षरेष्वप्यखिलगुरुषु सान्निध्यसम्पत्समृद्धिं
तद्वत्सान्निध्यवृद्धिं मुखगुरुषु वदेन्नित्यकर्मादिभिश्च ।
सान्निध्यादेर्विनाशं धनविभवहर्तिं मध्यगौ चान्त्यगौ चेत्
स्थानभ्रंशं च शुद्धिक्षयमिह भविता रोगदं क्षेत्रपानाम् ॥ २१ ॥

मध्यस्थो लघुरातनोति नियतं क्षेत्राधिपानां मृतिं
चान्त्यस्थोऽखिलवित्तकोशधरणीचैतन्यहानिं तथा ।
आद्ये चेद्बहुवित्तलाभमनिशं चैतन्यवृद्धिं लघौ
क्षेत्रेशादिषु पुष्टिमाकलयते देशाभिवृद्धिं त्रिके ॥ २२ ॥

**स्थितिः**

वामाङ्घ्रिणा भगवतीं चान्येनान्यं विचिन्तयेत् ।
चालने चलनं वाच्यं दूतन्यस्ताङ्घ्रिणोऽग्रतः ॥ २३ ॥

**भावः**

दैवज्ञसावधानत्वं देवसान्निध्यसूचकम् ।
यथा दैवविदः स्वान्तं तथा देवेऽपि चिन्त्यताम् ॥ २४ ॥

विनयवति च दूते सुन्दरे सुप्रसन्ने सति विबुधवरस्यानुग्रहोऽस्तीति वाच्यः ।
कथितगुणविहीने देवकोपश्च तद्वत् समुपहरति नो चेत् पूज्यपूजाव्यतीतिः ॥ २५ ॥

**वस्त्रविचारः**

सात्त्विकः श्वेतवर्णः स्याद्रक्तवर्णस्तु राजसः ।
तामसः कृष्णवर्णश्च हरितः शान्तराजसः ॥ २६ ॥

पीतः सत्त्वरजस्तद्वत् ताम्रस्तामसराजसः ।
त्रिगुणश्चित्रवर्णः स्याद् दृढे दार्ढ्यगुणः स्मृतः ॥ २७ ॥

दूतस्य वस्त्रलेपाद्यैर्देवस्य गुणनिर्णयम् ।
मलिने प्रेतबाधा स्यादार्द्रे शुद्धिविहीनताम् ॥ २८ ॥

**अन्यच्च तत्कालजम्**

मार्जालडुण्डुभोलूककरटश्वादिदर्शनम् ।
रुते च तत्तद्वेशेन क्षेत्राशुद्धिं विनिर्दिशेत् ॥ २९ ॥

ब्राह्मणादिचतुष्कानां दर्शने दोषदायिनः ।
एकद्विरेकद्वितया व्यक्तयोग्रे समागताः ॥ ३० ॥

वर्णाश्रमोक्तलिङ्गाश्चेन्न दोषो शकुने तदा ।
देवः स्वकुलया दीप्त इति वाच्यं मनीषिभिः ॥ ३१ ॥

**मन्दिरगतिनिरूपणम्**

अवसितमुपयाते तत्र दैवज्ञवर्ये परिजनरहितं चेदत्र देवो तथा स्यात् ।
परिजननिबिडं चेद्देवदेवोऽपि तद्वद्वदतु सपरिवारः पूज्यते नित्यमेवम् ॥ ३२ ॥

अन्तःप्रवेशः शुभदो नराणां देवालये दैवविदः पुरस्तात् ।
देवानुकूल्याय भवेच्च तस्माद्विनिर्गमं दोषदमेव नूनम् ॥ ३३ ॥

वेदाध्ययनघोषश्च तथा पुण्याहनिस्वनः ।
गन्धश्च सुरभिर्वायुः सुखस्पर्शः प्रदक्षिणः ॥ ३४ ॥

नीराजनं च देवानां नामसङ्कीर्तनं तथा ।
एते देवस्य सान्निध्यसूचकाः प्रवदन्ति हि ॥ ३५ ॥

आदौ तु दीपमवलोकयते यदि स्यादायुर्महाशनसुखं यदि तण्डुलं च ।
व्रीहिर्महागदकरं मृतिदं च भस्म दारिद्र्यकृत्कुसुममात्मसुखं निवेद्यम् ॥ ३६ ॥

निवाते दीपनाशः स्याद्देवसान्निध्यहानिकृत् ।
पात्रादिपतनं देवबिम्बपातस्य सूचकम् ॥ ३७ ॥

**प्रश्नक्रियासम्भवम्**

प्रश्नानुष्ठानसम्भारसम्भृतौ प्राक्तु भस्मनः ।
आनीतिर्देवनाशाय दीपस्याधिकमुत्तमम् ॥ ३८ ॥

पूजोपकरणा ये ये सुमचन्दनचन्द्रकाः ।
यदि देवस्य पूजायां तदूनमिति कथ्यताम् ॥ ३९ ॥

तण्डुलश्च निवेद्याभिवृद्धिं व्रीहिस्तु दुष्कृतम् ।
वस्त्रमानीयते देववस्त्रदोषं विनिर्दिशेत् ॥ ४० ॥

निवेद्यवस्तून्यानीते निवेद्याशुचिमादिशेत् ।
गुरुपूजाविधिः कार्या ह्यष्टमङ्गलभाजने ॥ ४१ ॥

पत्रवर्तिजलक्षीरघृततैलानि चेत्तदा ।
तत्तद्दोषेण देवस्य पुष्टिहानिर्निरन्तरम् ॥ ४२ ॥

**रेखा**

प्राग्रेखा लिखिताग्रतो यदि महासान्निध्यवृद्धिं वदे-
द्याम्या चेन्नरगोगजाजविहगादीनामुपान्ते मृतिम् ।
सौम्या चेन्नृपमाननं प्रतिदिनं चैतन्यमर्थागमं
नीचारातिभयं स्वकीयकलहं पीठच्युतिं पश्चिमा ॥ ४३ ॥

अन्ता रेखा लिखेदादौ यदि तद्देवमन्दिरे ।
अन्यदेवप्रतिष्ठानमासीदित्येव कथ्यताम् ॥ ४४ ॥

**सूत्रचिन्तनम्**

सामान्याधिपती सूत्रे नवांशं तारकाभिधम् ।
महासूत्रं पृथिव्यम्भस्तेजोवाय्वम्बरात्मकम् ॥ ४५ ॥

नाथाश्च बुधशुक्रारमन्दजीवाः क्रमादिमे ।
तेषां बलाबलत्वेन गुणदोषांश्च चिन्तयेत् ॥ ४६ ॥

पृथिवी पादयोर्वस्त्यामम्भस्तेजोदरस्थले ।
हृदये मारुतो व्योम शिरस्यङ्गस्थितिर्यथा ॥ ४७ ॥

मृतिसूत्रेण वैकल्यं रोगसूत्रेण भेदनम् ।
जीवसूत्रेण सान्निध्यं निर्वैकल्यं निरूपयेत् ॥ ४८ ॥

देवप्रश्ने विदध्यात्सततमपि महज्जीवसूत्राधिकश्चेत्
सान्निध्यक्षेत्रनित्योत्सवधनसुकृतक्षेत्रनाथादिसौख्यम् ।
रोगाधिक्ये विवादं निखिलधनविनाशामयाश्चोरपीडा
सान्निध्ये नित्यकर्मस्वखिलमशुभदं मृत्यवो मृत्युसूत्रे ॥ ४९ ॥

पृथ्वीसूत्रफलम्

पृथ्वीसूत्रे जीवने ज्ञे बलाढ्ये प्रासादार्चादाढ्र्यनैर्मल्यवृद्धिम् ।
श्रीरामादेर्वैष्णवांशस्य तुष्टिं क्षेत्रेलायाः पुष्टिमाप्नोत्यवश्यम् ॥ ५० ॥

देवप्रश्ने चादिमे रोगसूत्रे ज्ञेऽनिष्टस्थे दुर्बले पापयुक्ते ।
प्रासादान्तर्मक्षिकादिप्रपीडा लोपो वाच्यो देवगन्धोपयोगे ॥ ५१ ॥

भूसूत्रे मृतिगे बुधे व्ययविनाशस्थे च पापान्विते
बिम्बे वा चलनं तथाऽऽयुधहतिं बिम्बस्य भङ्गं तथा ।
क्षेत्रेशान् प्रति राजवैरमुदितं शापं त्वसह्यव्यथा-
मेतेषां तु विनिर्दिशेद्बलवशान्मिश्रे तु मिश्रं फलम् ॥ ५२ ॥

अप्सूत्रफलम्

द्वितीयसूत्रे यदि जीवनाख्ये शुक्रे बलाढ्ये शुभवर्गयुक्ते ।
तटाककूपादिशुचिं तदीयजलाभिषेकाच्छुचिमाहुरीशे ॥ ५३ ॥

रुजि जले भृगुजे विबले जले शिथिलदुर्बलजन्तुविनाशनम् ।
कुसुमसन्ततिसञ्चितपादपक्षपणमेव वदन्ति पुराविदः ॥ ५४ ॥

पयसि मृतिकरेऽच्छेऽनिष्टभावाधिनाथत्रिदशगुरुसमेतेऽनिष्टगे क्षेत्रदेशे ।
अधिककदननष्टब्रह्मरक्षोनिवासान्नियतमशुचिमेव प्रादिशेत्तन्निवेद्ये ॥ ५५ ॥

**तेजःसूत्रफलम्**

शिखिनि जीवनदे धरणीसुते बलयुते शुभवर्गदृगन्विते ।
नियतमायुधदीपविशेषतः शुभमतो धरणीधनवृद्धयः ॥ ५६ ॥

वह्नौ रोगगतेऽग्निभीतिनृपचोरारातिपीडां वदे-
द्दीपभ्रंशमिहास्त्रसङ्गमशुचिं पित्तोष्णरक्तामयान् ।
वह्नौ मृत्युगतेऽखिलाशुचिमतो जीर्तिं च देवच्युतिं
मृत्युं देवजनेषु दैवतकलाशुद्धिं रुजं कर्मिणाम् ॥ ५७ ॥

**वायुसूत्रफलम्**

देवप्रश्ने वायुसूत्रे च जीवे मन्दे सुस्थे क्षेत्रबिम्बादिदार्ढ्यम् ।
देवागारारामवृक्षादिवृद्धिं सौख्यं ब्रूयाद्देवदासादिकानाम् ॥ ५८ ॥

रोगदे मरुति चार्कनन्दने दुःस्थिते गुलिकराशिपान्विते ।
वायुभीतिमत एव भूरुहच्छेदपातपरिचारकापदः ॥ ५९ ॥

मरुति चार्कसुते मृतिगेऽबले गुलिकराशिनवांशपसंयुते ।
सुरगृहोपगृहादिषु दुर्मृतस्वपरिचारकपीडनमादिशेत् ॥ ६० ॥

**आकाशसूत्रफलम्**

खे जीवे देवपूज्ये शुभयुतिदृगुपेते बलाढ्ये च सुस्थे
देवप्रीतिं विदध्याद्धरणिसुमनसां तोषमाचार्यतुष्टिम् ।
रोगे देवस्वहानिं परिजनकलहं बिम्बनैवेद्यभङ्गं
मृत्यौ क्षेत्रेशनाशं जनपदविपदं कोशहानिं च दद्यात् ॥ ६१ ॥

**सूत्राधिक्यफलम्**

देवप्रश्नाभिधाने भवति यदि महाजीवसूत्राधिकत्वे
सान्निध्यक्षेत्रनित्योत्सवसुकृतधनक्षेत्रनाथादिसौख्यम् ।
रोगाधिक्ये विवादं निखिलधनविनाशामयश्चोरपीडा
सान्निध्यं नित्यकर्माद्यखिलमशुभदं मृत्यवो मृत्युसूत्रे ॥ ६२ ॥

भूम्यादिसूत्रेष्वपि जीवनेषु तदीश्वरेष्विष्टभसौम्यभेषु ।
सान्निध्यवृद्धिं सकलार्थलाभं क्षेत्राधिपाः सन्ति हि सौख्यभाजः ॥ ६३ ॥

एवं भूम्यादिसूत्रे रुजि च धनहर्तिं क्षेत्रनाथप्रवासं
प्रासादारामभण्डारकसदनहर्तिं नित्यपूजादिलोपम् ।
क्षेत्रेशोऽहं न च त्वं त्विति कलहगिरा क्षेत्रपाणां च वैरं
तस्मात्कर्मादिलोपं वदतु बुधवरस्तत्तदुक्तानुरूपम् ॥ ६४ ॥

राश्यधिपस्य तु सूत्रे मृतौ यदि मृत्युदोषमप्यूह्यम् ।
आयुधनाशो वाच्यो रोगे वल्मीकयुक्तमादेश्यम् ॥ ६५ ॥

धनधान्यसमृद्धिः स्याज्जीवे सूत्रे क्रमादेवम् ॥ १/२ ॥

भूसूत्रे च मृतौ बुधे च विबले रन्ध्रारिरिःफस्थिते
सान्निध्यादिधनक्षयं च कलहं क्षेत्राधिपानां मृतिः ।
बिम्बे चेत्प्रवदेत् क्षतिं मृतिगते तोये तु पूर्वोक्तवत्
कूपादौ पतनं जलाशुचिरुजं स्वेदं च बिम्बे वदेत् ॥ ६६ ॥

षष्ठान्त्याष्टमगेन्दुजेऽतिविबले मृत्युप्रदे चादिमे
सूत्रे बालकगोकुलाण्डजमृती रोगास्त्रिदोषोद्भवाः ।
श्रीरामाद्यवतारविष्णुयुवराजामर्षदुष्कीर्तयः
सूत्रे जीवनदे फलं तु शुभदं व्यत्यासतो व्यत्यये ॥ ६७ ॥

राश्योः सूत्रे मृतौ वा यदि भवति तदा बिम्बविच्छेदमाहू
रोगे प्रासादजैर्ण्यं त्वशुचिमपि तथा द्रव्यनाशं च कुर्यात् ।
जीवे द्रव्यस्य वृद्धिर्बहुशुभदफलं तत्र सान्निध्यवृद्धि-
र्देवप्रश्ने तु सूत्रे फलमिति च वदेद्दैवविद्देवभक्तः ॥ ६८ ॥

## त्रिस्फुटनिरूपणम्

पापाढ्यं त्रिस्फुटं कर्किवृश्चिकान्त्यसमाश्रितम् ।
तन्नक्षत्रोद्भवानां च क्षेत्रेशानां मृतिप्रदम् ॥ ६९ ॥

चरे चरांशे शुभदैरदृष्टेऽप्यधोमुखे त्रिस्फुटयोग एव ।
संक्षोभणं बिम्बनिकेतनानामनिष्टदं स्यात्परिचारकाणाम् ॥ ७० ॥

स्थिरभवने स्थिरभांशे त्रिस्फुटमतिशोभनं वदन्त्यार्याः ।
धनधान्यगुणसमृद्धिं क्षेत्रजनश्चाखिलं सुखं लभते ॥ ७१ ॥

चरराश्यंशैरुदितैर्देवस्योडुत्रिकोणगैर्दोषम् ।
मृतिचोराग्निनृपालैः पीडायुधबिम्बदोषमपि वाच्यम् ॥ ७२ ॥

त्रिस्फुटराशौ लग्ने शुभग्रहाः शुभफलं सदा दद्युः ।
पापग्रहेण युक्ते भूतफलं सर्वमेवमशुभं स्यात् ॥ ७३ ॥

चरमांशे स्यादुभये देवस्योडुत्रिकोणगे दोषः ।
रिपुचोराग्निनृपालैः पीडायुधबिम्बदोषमचिरेण ॥ ७४ ॥

संहारगमसद्युक्तं त्रिस्फुटं लग्नराशिगम् ।
बिम्बस्य नाशं प्रवदेद्धने रक्षकनाशनम् ॥ ७५ ॥

तृतीये परिचाराणां चतुर्थे क्षेत्रवासिनाम् ।
पञ्चमे मन्त्रबिम्बस्य नाशं षष्ठे तनुक्षतिः ॥ ७६ ॥

सप्तमे भक्तवृन्दानामष्टमे स्थपतेरपि ।
नवमे क्षेत्रनाथानां दशमे कर्मिणामपि ॥ ७७ ॥

एकादशे गजादीनामाचार्याणां व्यये तथा ।
विनाशं प्रवदेद्धीमान् देवताप्रश्नचिन्तने ॥ ७८ ॥

सृष्टिखण्डगृहोडुस्थं त्रिस्फुटं जीवसूत्रकृत् ।
स्थितौ रोगं भवेत्सूत्रं संहारे मृत्युदं तथा ॥ ७९ ॥

देवे त्रिस्फुटवर्गतस्तदधिपैस्तत्तद्गतर्क्षैः क्रमात्
प्रासादं मुखमण्डपाङ्कणचतुश्शालाश्च दीपालयम् ।
दीपस्तम्भमिहादिशेच्छुभयुतिर्वीक्षा च वर्गस्थिति-
स्तेषां मध्यगतिर्बलं च शुभदं तद्व्यत्यये व्यत्ययः ॥ ८० ॥

## चतुःस्फुटफलम्

चतुःस्फुटर्क्षे चरराशिसंस्थे चरांशके पापयुतेक्षिते वा ।
देवालये देवलकस्य दोषात् सान्निध्यनाशं मुनयो वदन्ति ॥ ८१ ॥

खरैः समेतं यदि वा चतुःस्फुटं विलग्नभावादिषु यत्र तिष्ठति ।
ककण्ठवस्त्यादिषु तद्गणतो वदन्ति वैकल्यमथेशविग्रहे ॥ ८२ ॥

एवं चतुःस्फुटदृगाणमुखादिनाथयोगर्क्षपैरपि शुभाशुभकारकत्वात् ।
आचार्यदेवलकदेवगृहाधिनाथदासोपदेवभजतां प्रवदेत्फलानि ॥ ८३ ॥

**पञ्चस्फुटफलम्**

बिम्बं चाभरणं निवेद्यनिलयं प्रासादवापीसरित्-
कूपं तोरणवाहनं बलिशिलाभङ्गं च पञ्चस्फुटात् ।
मान्द्याद्यैर्नवदोषकैर्युतमिदं सान्निध्यनाशं वदेत्
तत्तच्छान्तिकरं करोतु च विधिं संवीक्ष्य तन्त्रागमम् ॥ ८४ ॥

जाग्रत्स्वप्नादिकं वाच्यमुदयर्क्षाधिपस्य वै ।
देवस्य तु विशेषेण नवभागविशेषतः ॥ ८५ ॥

उच्चांशे स्वनवांशे च जागरूकं वदन्ति हि ।
सुहृन्नवांशकं स्वप्नं सुप्तं नीचारिभांशकम् ॥ ८६ ॥

जाग्रत्सम्पत्करं स्याच्छुभदमपि तथा स्वप्नकालेऽर्थनाशः
सुप्ते पुण्यस्य नाशो मरणमरिभयं सर्वकार्यार्थहानिः ॥ १/२ ॥

द्रेक्काणाद्यधिपाश्रितर्क्षपतिभिः पञ्चस्फुटस्य क्रमात्
सञ्चिन्त्यात्र शुभाशुभानि विधिवद्दैवज्ञवर्यस्तथा ।
देवस्याभरणं निवेद्यनिलयं कूपं बलिप्रस्तरं
वापीं वाहनमत्र तद्बलवशाद्वाच्यं यथा युक्तितः ॥ ८७ ॥

**प्राणादित्रयस्फुटफलम्**

प्राणेऽधिके तापसमेतमत्र बिम्बं विधेयं मरिचादिलेपैः ।
देहेऽधिके देवजने च देवे वृद्धिर्विनाशं मरणेऽधिके स्यात् ॥ ८८ ॥

**अष्टमङ्गलफलम्**

सान्निध्यस्य विवर्धनं दिनमणिर्बिम्बस्य भङ्गं कुज-
स्तद्वद्देवगुरुः प्रसादमतुलं देवस्य पुण्योदयम् ।
सौम्यो रक्षकदोषतोऽर्थविहतिं वैरं विवादं तथा
सान्निध्यस्य च भूषणस्य कुरुते वृद्धिं धनार्तिं भृगुः ॥ ८९ ॥

मन्दश्चोरभयं करोति कलहं रोगं सदा कर्मिणा-
मिन्दुः कूपतटाकमण्डपमुखावाप्तिर्जनस्यागमम् ।

राहुश्चोरभयं करोति कलहं नीचप्रवेशादिकं
ज्ञात्वैवं फलमष्टमङ्गलभवं प्रश्ने वदेद्दैविके ॥ ९० ॥

अधोमध्योर्ध्वभागेषु वपुषो दक्षिणादयः ।
युग्मसंख्यावपुर्भागे ग्रहोक्तं दोषमादिशेत् ॥ ९१ ॥

अष्टमङ्गलखेटानां पापदृग्योगसङ्कुले ।
तत्तद्ग्रहोक्तेष्वङ्गेषु दोषं देवस्य निर्दिशेत् ॥ ९२ ॥

कुक्षिर्वक्षःशिरोबाहुर्जघनं मुखमूरु च ।
पादश्चाङ्गानि सूर्यादिराहुपर्यन्तमिष्यते ॥ ९३ ॥

## दीपलक्षणम्

स्नेहो देवालयः स्यादथ विबुधवरा वर्तयो वर्तमाना
ज्वाला चैतन्यमेव मलमिह विमलं ना यथा देवकार्ये ।
पात्रं क्षेत्रप्रदेशस्त्वथ मृदुपरुषौ मारुतौ बन्धुशत्रू
नित्यं प्रायेण सर्वं पिशुनयति महादेवतात्मा स दीपः ॥ ९४ ॥

स्नेहाधिष्ठानवर्त्यग्निसंयोगे यावदीर्यते ।
तावद्दीपस्य दीपत्वं दीयते दीर्घमायुषम् ॥ ९५ ॥

ज्वाला चाञ्चल्यरहिता चायता रुचिरप्रभा ।
देवसान्निध्यवृद्धित्वं कर्मणा कर्मिणां वदेत् ॥ ९६ ॥

ज्वाला चाञ्चल्यसंयुक्ता देवप्रश्ने विशेषतः ।
सान्निध्यवृद्धिकर्माणि शिथिलानीति कथ्यते ॥ ९७ ॥

हिरण्या कनका रक्ता कृष्णा चैवाथ पिङ्गला ।
बहुरूपाऽतिरक्ता च सप्तजिह्वाः प्रकीर्तिताः ॥ ९८ ॥

ज्वालाद्वये तु सम्प्राप्ते भिन्नो देवस्य मूर्धनि ।
किरीटादिविनाशं वा छेदनं वा वदेद्बुधः ॥ ९९ ॥

एकवर्तिर्महाव्याधिर्द्विवर्तिस्तु महद्धनम् ।
त्रिवर्तिर्मोहमालस्यं चतुर्वर्तिर्दरिद्रता ॥ १०० ॥

पञ्चवर्तिस्तु भद्रं स्याद्द्विवर्तिस्तु सुशोभनम् ॥ १/२ ॥

## कार्तस्वरनिरूपणम्

स्वर्णमूर्ध्वमुखं श्रीदं देवसान्निध्यवृद्धिदम् ।
अधोमुखं यदा स्वर्णं सान्निध्यक्षयसूचकम् ॥ १०१ ॥

ऊर्ध्वंप्राप्तमुखे पणे परिजनक्षेत्रेशभूमीसुरा-
रोग्यं दीपनिवेद्यनर्तककलासान्निध्यवृद्धिं वदेत् ।
आज्ञाद्रव्यसमागमेष्टसकलद्रव्याप्तिनित्यश्रियो
बिम्बस्य स्थिरतां च वक्ष्यति फलं सर्वेष्विदं राशिषु ॥ १०२ ॥

निस्त्रिंशप्रतिमोपपीठचलनच्छेदादिकं सन्निधिः
क्षीणत्वं च निवेद्यदीपविहती चाज्ञा धनानां हतिम् ।
क्षेत्रेशं प्रतिवादजातदुरितद्रव्यक्षयेणाचिरात्
क्षेत्राभावमधोमुखे कथयतां स्वर्णे फलं दैववित् ॥ १०३ ॥

स्वर्णांशश्वरभे करोति चलनं बिम्बस्य दारिद्र्यतां
सान्निध्योत्सवहीनतां स्थिरगते व्यत्यस्तमेतत्फलम् ।
द्वन्द्वे सर्वदिगागतद्रविणसम्पत्तिं गुरुब्राह्मण-
क्षेमं देवनिवेद्यकर्मकुशलं नेपथ्यकोशोन्नतिम् ॥ १०४ ॥

देवाङ्गेष्वखिलेषु होममनघं पुष्पाक्षतोर्ध्वस्थितं
भूमिस्पर्शनतः करोति विपदं प्रागादिदिक्षु प्लवे ।
सान्निध्यं दहनाद्भयं यमभयं म्लेच्छप्रवेशं रिपु-
क्षुद्रं कृष्णविलेपनं बहुधनं पैशाचपीडां वदेत् ॥ १०५ ॥

तिर्यक्त्वं मृतिदं भूस्थं कोणप्लवसमन्वितम् ।
पापयुग्भावसम्बन्धं जनानां रोगदं भवेत् ॥ १०६ ॥

## पूजापात्राणि

दीपो रविर्देवगृहेषु शङ्खः सोमस्तथा धूपमिहोर्विजः स्यात् ।
बुधस्तु गन्धो गुरुरत्र घण्टा पुष्पाणि शुक्रो रविजस्तु पात्रम् ॥ १०७ ॥

देवताचिन्तनम्

मार्तण्डोदयदृष्टिकेन्द्रगतयः सिंहस्य लग्नस्थितिः
शम्भोः सन्निधिसूचकाः शिशिरगोश्चैते कुलीरादयः ।
दुर्गायास्तु कुजालयोदयदृशः स्कन्दस्य काल्यास्तथा
शास्तुश्चार्कभुवो हरेः शशिभुवः सर्वेश्वराणां गुरोः ॥ १०८ ॥

श्रीरुद्रविष्णुदुर्गा ब्रह्मकुमारश्च लोकपालयुताः ।
शुक्रार्कसौम्यशीतगुगुरुकुजसौरेषु जानीयुः ॥ १०९ ॥

अर्कश्शम्भुरुडुप्रभुर्गिरिसुता भौमः कुमारः स्मृत-
श्चान्द्री नन्दसुतस्तथा रघुपतिर्जीवस्तु नारायणः ।
दैत्येड्यो गणनायको भगवती शास्त्रादयः सूर्यजः
क्षीणः कौजगतो विधुः समगृहे भौमश्च काल्यादयः ॥ ११० ॥

देवता ग्रहरूपेण चराः सर्वत्र राशिषु ।
शिवः सूर्यो निशानाथः पार्वती षण्मुखः कुजः ॥ १११ ॥

नारायणो बुधो ज्ञेयः पद्मभूर्गुरुरुच्यते ।
शुक्रः शचीपतिश्चैव यमः सूर्यात्मजस्तथा ॥ ११२ ॥

राहुर्भूतश्चित्रगुप्तकालकेतुर्नवग्रहाः ॥ १/२ ॥

वह्न्यम्बुशिखिजा विष्णुबिडौजशचिकाः द्विज ।
सूर्यादीनां खगानां च नाथा ज्ञेयाः क्रमेण च ॥ ११३ ॥

हनूमान्

अर्कपुत्रेण वाच्यः स्याद्धनूमान् मारुतात्मजः ।
बुधदृष्ट्यंशकत्वेन विशेषात्प्रश्नगोचरे ॥ ११४ ॥

विनायकः

उभयराशिषु मध्यदृगाणभाग्गणपतिस्तरणिर्विषमे भृगुः ।
अपि च तौ वृषभान्त्यगतौ वृषांशकगतौ च विनायक इष्यतः ॥ ११५ ॥

गुहः

ओजराशिषु शुभर्क्षगः कुजो मेषगः सुरगुरुर्गुहो भवेत् ।
एवमादिमदृगाणगो रविः कोणराशिषु षडाननः सदा ॥ ११६ ॥

**धन्वन्तरिः**

रविकण्टककोणस्थो धिषणो रविवर्गगः ।
धन्वन्तरीति कथ्यन्ते विष्णुदेवांशसम्भवः ॥ ११७ ॥

**शिवभेदः**

सर्वराशिषु शम्भुः स्याद्रविः पञ्चाक्षराभिधः ।
चन्द्रकेन्द्रे त्रिकोणे चेदर्धनारीश्वरः स्मृतः ॥ ११८ ॥

कुजकेन्द्रत्रिकोणे चेद्भैरवो भैरवीयुतः ।
बुधस्य केन्द्रकोणे चेच्छिवनारायणो भवेत् ॥ ११९ ॥

गुरुकेन्द्रत्रिकोणे चेद्रविर्मृत्युञ्जयाभिधः ।
शुक्रस्य नटराजः स्यात् किरातोऽर्कसुतस्य च ॥ १२० ॥

शुक्रजीवौ केन्द्रगौ चेद्दक्षिणामूर्तिरीरितः ॥ १/२ ॥

**मोहिनीभेदः**

गुरौ केन्द्रे भृगौ कोणे चन्द्रस्य यदि मोहिनी ।
तयोरेकः सौम्ययुक्तो यशोदागर्भसम्भवा ॥ १२१ ॥

भानुयुक्तः सुधाभानुर्मन्ददृष्टश्च मोहिनी ।
गुरुः केन्द्रगतस्तर्हि शास्तृमाता भविष्यति ॥ १२२ ॥

**दुर्गाभेदः**

गुरुकेन्द्रगतश्चन्द्रो ह्यन्नपूर्णेश्वरी भवेत् ।
बुधकेन्द्रे तु वाग्देवी सितकेन्द्रे तु वैष्णवी ॥ १२३ ॥

सितेड्ययोश्चेत्केन्द्रस्थशशी त्रिपुरसुन्दरी ।
बुधजीवकवीनां चेद्राजराजेश्वरी भवेत् ॥ १२४ ॥

स्वर्क्षांशे चन्द्रमाम्भःस्थो दुर्गा सप्तमराशिगः ।
दशमे जलराशौ चेद्दृष्टिपातोत्सुका भवेत् ॥ १२५ ॥

रविकेन्द्रगतश्चन्द्रो रक्तबीजनिषूदिनी ।
कुजकेन्द्रगतः शुम्भनिशुम्भकुलनाशिनी ॥ १२६ ॥

मन्दकेन्द्रे सुधाभानुर्महिषासुरमर्दिनी ।
चन्द्रत्रिभागगैः खेटैः कृतान्यैः कर्तुमुत्सुका ॥ १२७ ॥

त्रिकोणगैश्च तद्राशिगतैरेवं निरूपयेत् ।
अंशकेनापि वक्तव्यं बलवत्त्वान्मनीषिभिः ॥ १२८ ॥

मन्दचन्द्रजसन्दृष्टः शशी पापसमन्वितः ।
गुरुकेन्द्रगतस्तर्हि मातङ्गी देवता भवेत् ॥ १२९ ॥

एवं चन्द्रे शनित्र्यंशे बुधत्र्यंशेऽवतिष्ठति ।
तदा हि श्यामलादेवी रत्नद्वीपनिवासिनी ॥ १३० ॥

**कालीभेदः**

स्वर्क्षे स्वक्षांशके भौमो भद्रकालीति कथ्यते ।
ओजर्क्षे युग्मराश्यंशे वीरभद्रसहोदरी ॥ १३१ ॥

रविणा संयुते दृष्टे रविराशिगतांशके ।
भैरवी शिवकोपोत्था कुजे शम्भुस्थिता भवेत् ॥ १३२ ॥

पापमध्यस्थितो भौमो काली दारिकमर्दिनी ।
लग्नभागादतीतश्चेत् कृतं दारिकनाशनम् ॥ १३३ ॥

चन्द्रेण संयुते दृष्टे चन्द्रराशिगतांशके ।
बलभद्राभिधा देवी नीचे चेन्नीचपूजिता ॥ १३४ ॥

बुधेन चेच्चण्डिका स्याद्गुरुणासौ शिवङ्करी ।
रक्तेश्वरी सितेनैव चामुण्डी सूर्यसूनुना ॥ १३५ ॥

राहुणा रक्तवाराही केतुना नीचपूजिता ।
मान्दिना संयुतो दृष्टो क्षुद्रमारणदेवता ॥ १३६ ॥

नीचारातिगृहस्थितस्य धरणीसूनोः श्मशनाभिधा
कालीभैरवदेवताश्च कथिताः क्रूराश्च दुर्देवताः ।
घण्टकर्णमुखाश्च नीचरिपुगस्यार्कात्मजस्यासिताः
कुक्षिर्नीचजनाश्रितश्च मृगया कोलाख्यपैशाचकाः ॥ १३७ ॥

चरोभयराशिषु चान्द्री नरसिंहं सुदर्शनं वाच्यम् ॥ १/२ ॥

**शाक्तेयमूर्तिः**

रात्रीश्वरेण सहिते धरणीतनूजे बाधागते तनुपतौ यदि षष्ठराशौ ।
कर्माधिपे निधनरिःफरिपुस्थिते वा शाक्तेयमूर्तिपरिपीडनमेति नूनम् ॥ १३८ ॥

**शालग्रामः**

उपासनाभावपतौ बुधे वा बुधेक्षिते वा बुधराशिगे वा ।
वदेत्तदा तत्र मुरारिशालग्रामं तदंशेन च मूर्तिभेदाः ॥ १३९ ॥

शालग्रामशिलां बुधेन नवमस्थानस्थितेनाथवा
तन्नाथेन युतेक्षितेन तदुदितांशौपम्यसंख्यां वदेत् ।

**लिङ्गम्**

तद्वद्भास्करयोगवीक्षणनवांशाद्यैस्तु लिङ्गं वदे-
च्छैवं दूष्यममुष्य भूमिजसमायोगेक्षणाद्यैरपि ॥ १४० ॥

**दशावतारमूर्तयः**

रामावतारः सूर्यस्य चन्द्रस्य यदुनायकः ।
नृसिंहो भूमिपुत्रस्य बुद्धो सोमसुतस्य च ॥ १४१ ॥

वामनो विबुधेज्यस्य भार्गवो भार्गवस्य च ।
कूर्मो भास्करपुत्रस्य सैंहिकेयस्य सूकरः ॥ १४२ ॥

केतोर्मीनावतारश्च ये चान्ये तेऽपि खेटजाः ॥ १/२ ॥

**बिम्बसाधनानि**

बिम्बं ताम्रमयं रविः शशधरो नीलाञ्जनाश्मादिकं
हैमं भूमिसुतः करोति विधिवत्खङ्गं तथा स्थण्डिलम् ।
शालग्रामशिलादिकं तु शशिजो जीवस्तु रौप्यं भृगुः
श्रीचक्रं रविजो महीरुहमयं पीठं शिलादीनि च ॥ १४३ ॥

सूर्ये बिम्बपतौ बलेन सहिते खट्वादिसम्मिश्रितं
वीर्योने विटपीकृतं हिमकरे स्वर्णं कुजेऽश्मीकृतम् ।
सौम्ये काष्ठमयं च निर्जरगुरौ लोहैः कृतं पञ्चभिः
शुक्रे रूप्यमयं शनौ त्रपुकसीसाभ्यां क्रमेणोह्यताम् ॥ १४४ ॥

**बिम्बविधाः**

शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥ १४५ ॥

**देवभावनिरूपणम्**

सान्निध्यवित्तपरिचारकवाहबिम्बविद्वेषिभूषणनिवेद्यपदार्थभेदाः ।
क्षेत्राधिपप्रथितकर्मधनागमार्थनाशादयः खलु विलग्नमुखा हि भावाः ॥ १४६ ॥

सान्निध्यक्षेत्रबिम्बानि त्रीणि लग्नेन चिन्तयेत् ।
निधिकोशधनायानरक्षकानर्थराशिना ॥ १४७ ॥

चिन्तनीयास्तृतीयेन निवेद्यपरिचारकाः ।
प्रासादमण्डपादीनि चोपवेश्मानि वाहनम् ॥ ४८ ॥

क्षेत्रप्रदेशमखिलं चतुर्थेन विचिन्तयेत् ।
सान्निध्यमपि बिम्बं च पञ्चमेनाथ चिन्त्यताम् ॥ १४९ ॥

अशुद्धिशत्रवश्चोराश्चिन्तनीया हि शत्रुणा ।
चिन्त्यं जनपदं द्यूनराशिना भूषणानि च ॥ १५० ॥

सान्निध्यस्य निवेद्यस्य तथा परिजनस्य च ।
कार्यमष्टमभावेन गुणदोषनिरूपणे ॥ १५१ ॥

धर्मेण पुण्यं क्षेत्रेशाश्चाथ कर्माणि कर्मणा ।
नित्यान्यप्युत्सवादीनि चिन्त्या देवलका अपि ॥ १५२ ॥

सुकृतं च धनायानमप्यायेन विचिन्तयेत् ।
धननाशव्ययाचार्याश्चिन्त्याः स्युर्व्ययराशिना ॥ १५३ ॥

भावेषु लग्नादिषु यत्र सौम्यास्तदुक्तसान्निध्यमुखाभिवृद्धिः ।
पापस्थितिर्यत्र तदीरितानां वाच्यैव हानिर्बहुदूषणं वा ॥ १५४ ॥

लग्नाद्बिम्बमथाष्टमात्परिजनं धर्माज्जनान् पञ्चमात्
सान्निध्यं सहजान्निवेद्यमरितोऽशुद्धिं धनाद्रक्षकम् ।

मानाद्देवलकं भवात्सुचरितं क्षेत्रं सुखादन्त्यत-
स्त्वाचार्यं मदनात्सुधीर्जनपदं प्रश्ने वदेद्दैविके ॥ १५५ ॥

लग्नाद्बिम्बमथाष्टमात्परिजनं सान्निध्यपूजादि च
प्रासादोपगृहाणि वेश्मभवनाद्धर्माच्चु पुण्यानि च ।
वित्तादर्थधनागमान् रिपुगृहाच्चोरांश्च दुष्टादिकान्
सौम्यासौम्यदृगन्वयात् सदसदप्यालोच्य वाच्यं फलम् ॥ १५६ ॥

शिल्पी गुरुश्चान्नदाता प्रतिमा च यथाक्रमम् ।
रन्ध्रव्ययाभ्यां धर्मेण धिया चिन्त्या मनीषिभिः ॥ १५७ ॥

तण्डुलीकरणपात्रशुद्धिनित्यान्नपायसनिवेद्यकारिणः ।
चिन्तयेत्परिजनान् तृतीयभेनान्यवृत्तिपरिचारकोऽष्टमात् ॥ १५८ ॥

गन्धमाल्यकुसुमाद्युपार्जने शङ्खवाद्यनुतिगानकर्मणि ।
सम्प्रवृत्तपरिचारकोऽष्टमाच्चिन्त्यतेऽथ सचिवश्च पञ्चमात् ॥ १५९ ॥

निर्दुष्टे सगुणे मुहूर्तसमये पूर्वं प्रतिष्ठा ततः
पूजा चानुदिनं यथाविधि तथा प्रत्यब्दमप्युत्सवः ।
दोषे सत्युदिता च निष्कृतिरथो जीर्णौ पुनर्बिम्बयो-
र्जीर्णोद्धारविधिश्च सत्वरममी सान्निध्यसम्पत्प्रदाः ॥ १६० ॥

सौम्यानामुदयश्च दृष्टिरमराचार्यस्थितिश्चेप्सिते
भावे चाभिमते तथेतरखगा देवस्य तेऽनुग्रहम् ।
ब्रूयुः पापदृगन्वयानभिमतस्थानस्थसर्वग्रहाः
कोपं साशुभभावहेतुकमिदं तं वाऽथ भावं प्रति ॥ १६१ ॥

**लग्नभावचिन्तनम्**

सान्निध्यभावाः सुतलग्नरन्ध्रास्तदीशबन्धेन परस्परेण ।
सान्निध्यवृद्धिं निगदन्ति बिम्बस्योच्चादिकेष्वेषु शुभं शुभेषु ॥ १६२ ॥

**सान्निध्यचिन्तनम्**

लग्नात्पञ्चमलग्नरन्ध्रपतयस्त्वन्योन्यसम्बन्धिनो
बिम्बस्यामिततेजसः प्रतिदिनं सान्निध्यपूर्णस्थितिः ।

सौम्याश्चेत्प्रभवन्ति शोभनकरा भक्ताभिमुख्यप्रदाः
पापाश्चेत्प्रभवन्त्यशोभनकरा नीचारिभांशा यदि ॥ १६३ ॥

लग्नात्पञ्चमलग्नरन्ध्रपतयः क्रूरांशके वा चरे
बिम्बस्यात्र हि चाष्टबन्धविहतिश्चाश्चल्यचूर्णादिकम् ।
तत्प्राप्तौ नृपतेश्च शत्रुजभयं देशभ्रमं क्षेत्रपे-
ष्वन्योन्यारितया विनाशनसुतारिष्टादिकं वा वदेत् ॥ १६४ ॥

लग्नात्पञ्चमलाभवेश्मनवमाधीशास्तथा बान्धवा
अन्योन्यांशगकेन्द्रकोणसहिताः क्षेत्राभिवृद्धिप्रदाः ।
सौम्याश्चेदपि चोत्तरोत्तरमपि क्षेत्रार्थलाभादिक-
माज्ञाद्रव्यसमागमाद्यमशुभैर्न्यूनत्वमप्यादिशेत् ॥ १६५ ॥

आरूढभे स्वर्णनवांशतुल्यं वाक्यं नराङ्गादिकमाकलय्य ।
लग्नस्फुटानीतनवांशशिष्टभागादिकं योजयतु स्फुटाप्त्यै ॥ १६६ ॥

स्वर्णस्फुटस्यास्य दृगाणमुख्यवर्गा रवेश्चाङ्गिरसोऽधिकाश्चेत् ।
देवः स्वयम्भूरिति निर्दिशेत्तज्जनिश्च वर्गाधिपराशिदेशे ॥ १६७ ॥

कीटे रवौ बिम्बपतौ स्वयम्भूर्देवः प्रकल्प्येत बुधैरजस्रम् ।
देशो जने क्षेत्रनवांशवीर्यराशौ तदीशस्थितिभे च चिन्त्यः ॥ १६८ ॥

**बिम्बस्फुटाः**

गुरुं दिनगताहतं तनुपसंयुतं मण्डला-
द्विशोध्य च तदात्मरन्ध्रपयुतं हि बिम्बस्फुटम् ।
दृगाणमुखवर्गनाथबलवृद्धितोऽस्यालये
निवासनमुदीर्यतां भगवतो षडाधारकम् ॥ १६९ ॥

स्वर्णोपलरजतकांस्यककटुशर्करदारुलेपनैर्मुनिभिः ।
बिम्बानि पुरा पूर्वैः कृतानि तान्येवमादिशेन्मतिमान् ॥ १७० ॥

हत्वा तद्गतनाडिकाभिरमराचार्यस्फुटं भाजये-
न्नीतैश्चोदयलग्नसंयुतमपि त्यक्त्वाथ तन्मण्डलात् ।
तत्तत्पञ्चमलग्नरन्ध्रपयुतं बिम्बस्फुटं तत्खरै-
र्युक्तं पापनवांशकं यदि वदेद्बिम्बस्य जैर्ण्यं बुधः ॥ १७१ ॥

गुरोस्तु शान्तकारुण्ये शृङ्गारश्चन्द्रशुक्रयोः ।
बुधस्याद्भुतहास्यौ द्वौ मङ्गलादित्ययोस्तथा ॥ १७२ ॥

रौद्रवीररसौ सौरेर्बीभत्सकभयानकौ ।
बिम्बभावेन सञ्चिन्त्या रसा देवस्य सन्ततम् ॥ १७३ ॥

बिम्बस्य च्छेदभेदादिकमवनिभुवा संयुते बिम्बभावे
जीर्णत्वं मन्दयुक्ते फणिगुलिकयुते डुण्डुभस्पर्शनाद्यम् ।
केतोश्चूर्णप्रयोगं निगदतु मरिचालेपनाद्यं खरांशो-
र्योगे वैकल्यमङ्गे व्ययभवनगतः कोऽपि पापग्रहश्चेत् ॥ १७४ ॥

बिम्बं विचिन्त्यते येन चरराशिगतः स चेत् ।
भावश्चलनमादेश्यं पातोऽधोमुखगो यदि ॥ १७५ ॥

विचिन्त्यो बिम्बभावेनैवाष्टबन्धोऽपि तद्गुणैः ।
चरस्थिरत्वपूर्वा ये चतुर्थेनेति केचन ॥ १७६ ॥

**पञ्चकलाः**

परत्वतत्त्वं व्यूहत्वं विभवत्वं च पञ्चधा ।
अन्तर्यामित्वमर्चावतारत्वं च कलाः स्मृताः ॥ १७७ ॥

लग्नाष्टमे परत्वं च व्यूहत्वं लग्नपञ्चमे ।
पञ्चमाष्टमसम्बन्धे विभवत्वमुदाहृतम् ॥ १७८ ॥

तृतीयाष्टमसम्बन्धे ह्यन्तर्यामित्वमीर्यते ।
लग्नाष्टात्मजसम्बन्धेऽर्चावतारकला स्मृता ॥ १७९ ॥

**द्वितीयभावचिन्तनम्**

लग्नाद्द्वितीयभवने यदि पापखेटे पापेक्षितेऽपि च युते चरराशिगे वा ।
निध्यादिनाशमथ सौम्ययुतेक्षिते तु कोशादिवित्तविपुलं धनपे धने स्यात् ॥ १८० ॥

दुःस्थानस्थे वित्तनाथे तु वाच्यं रक्षाकर्तुर्दोषमप्येवमेव ।
श्रद्धालोपाद्देवकोपाद्यनर्थाः कुष्ठापस्मारान्त्रकुक्ष्यक्षिरोगाः ॥ १८१ ॥

## तृतीयभावचिन्तनम्

नैवेद्यं दोषयुक्तं भवति परिजने पूजके क्षेत्रनाथे
रक्षाकर्तर्यकस्माद्धनसुतनिधनं तत्स्थखेटोक्तरोगात् ।
सर्पादेर्मृत्युमेव प्रवदतु गुलिके वाच्यमाशौचकादि
प्रोक्तानां पापयोगे भवति खलु तदोच्छिष्टमूत्रादिकानि ॥ १८२ ॥

तृतीयभावाधिपतौ तु केन्द्रे विलग्नसम्बन्धयुते विशेषात् ।
निवेद्यवृद्धिर्भवतीति वाच्यं शुभान्विते चोत्तरमुत्तरं स्यात् ॥ १८३ ॥

तृतीयभे पापयुतेऽष्टमे वा ब्रूयान्निवेद्यं खलु दोषयुक्तम् ।
मन्देन हीनं विहतं कुजेन शवादि दुष्टं शिखिमान्दिसर्पैः ॥ १८४ ॥

ताम्बूलीदलपूगमूलनवधान्यादीनि सूर्येण चे-
द्द्राक्षातण्डुललाजपायसपयःकेरीफलानीन्दुना ।
कथ्यन्ते पृथुकाज्यपिष्टपिशुनान्युर्वीभुवा चान्द्रिणा
मध्वाज्यं गुरुणा गुलेक्षुचिपिटक्षीराणि वा कादलम् ॥ १८५ ॥

शुक्रेणाक्षतसर्पिरन्नमदिरामन्देन पूपादिकं
खेटे प्रोक्तनिवेद्यसाधनमिदं तत्तद्ग्रहेशैर्वदेत् ।
पक्वादीनि विचिन्तयेत्सहजभेनान्नादिकं रन्ध्रतो
नित्यं देवनिवेद्यसाधनमिदं सञ्चिन्त्यतां दैववित् ॥ १८६ ॥

## चतुर्थभावचिन्तनम्

प्रासादमण्डपमुखोपनिकेतनानां जीर्तिं वदेत्तपनजे तु चतुर्थयाते ।
दाहं विवस्वदसृजोर्गुलिकेऽघभाजां पातद्वयेऽभ्युगमं पतितान्त्यजानाम् ॥ १८७ ॥

चतुर्थपे सौम्ययुतेक्षिते वा चतुर्थभे देवगुरौ स्थिते वा ।
पाथोनभांशे यदि सूर्यपुत्रे देवालयः कुञ्जरलाभमेति ॥ १८८ ॥

तात्कालिकः स्थिरश्चैव द्विधा देवध्वजो भवेत् ।
दशमेनादिमश्चिन्त्यश्चतुर्थेन स्थिरध्वजः ॥ १८९ ॥

स्थाणौ वृषो मुररिपौ गरुडो द्वयात्मा शार्ङ्गीश्वरेऽथ गणराजि महादिमूषः ।
आर्ये हयः शिखिभवे शिखिकुक्कुटौ च सिंहो निशुम्भजिति वाहनकेतनाङ्काः ॥ १९० ॥

## पञ्चमभावचिन्तनम्

पञ्चमं तु विशेषेण पूर्वपुण्यं नृपप्रियम् ।
लग्नलग्नेशसम्बन्धाच्छुभमन्यद्विपर्यये ॥ १९१ ॥

पञ्चमं मन्त्रसान्निध्यमष्टमं च निवेद्यता ।
सान्निध्यद्वितयाद्बिम्बे सर्वोत्कृष्टद्युतिर्भवेत् ॥ १९२ ॥

पञ्चमं खरसंयुक्तं मन्त्रसान्निध्यदोषकृत् ।
नीचे मौढ्ये तथा खेटे मन्त्रहानिर्भवेद् ध्रुवम् ॥ १९३ ॥

## षष्ठभावचिन्तनम्

लग्नारूढशशाङ्ककेन्द्ररिपुभे वान्त्यालिकर्क्यंशके
राशौ कुत्रचन ग्रहो दशमभे क्रूरग्रहो वा यदि ।
लग्नादित्रितयस्य मोषकहृतं नष्टं धनं निर्दिशे-
दुक्तस्थानगतस्तु चोरविहगे नैकेषु वीर्यान्वितः ॥ १९४ ॥

भुक्तिदोषस्तु रविणा मद्यपानं शशाङ्कतः ।
कुजेनार्तवदोषः स्याद्बुधेन स्पर्शनाशुचिः ॥ १९५ ॥

गुरुणा दुर्वचः प्रोक्तं शुक्रेण विषयाशुचिः ।
मन्देनाशौचबन्धः स्याद्राहुणा शववेशनम् ॥ १९६ ॥

केतुना क्षुद्रदोषाद्या मान्दिना मृत्युसम्भवः ।
अशुद्धिर्देवतागारे षष्ठभावगतैर्वदेत् ॥ १९७ ॥

रेतःस्पर्शं शवस्पर्शं स्पर्शं मूत्रपुरीषयोः ।
रजस्वलायाः संस्पर्शं गुळिकेन विचिन्तयेत् ॥ १९८ ॥

## सप्तमभावचिन्तनम्

पापग्रहे सप्तमराशिसंस्थे हानिं वदेद्दीपविभूषणानम् ।
पूजा च तत्साधनमुत्सवो वा वैकल्यमेषां खगते तु कल्प्यम् ॥ १९९ ॥

लग्नात्सप्तमराशिपः शुभखगः केन्द्रत्रिकोणोपगो
लग्नेशादपि केन्द्रकोणगृहगस्तद्वर्गसंस्थोऽपि वा ।

देशस्वास्थ्यविभूषणाम्बरचयप्राप्तिं च दीपोन्नतिं
पापर्क्षान्वययोगतस्तदखिलं मिश्रं वदेद्दैविके ॥ २०० ॥

लग्नात्सप्तमराशिगो यदि खरो देशेष्वरिष्टं पुन-
र्मालागन्धविभूषणाम्बरचये दीपे च हानिं वदेत् ।
भौमे हानिरुदीरिता तु वसनं जीर्णं च हीनं शनौ
राह्वादौ शिथिलं वदेत्सगुळिके सत्त्वादिनाशं पुनः ॥ २०१ ॥

पापानामुदयादयोऽस्तभवने धर्मेऽथवा कर्मभे
क्षेत्रेशाः प्रतिपत्तिहीनमतयस्तस्मादिति प्रोच्यताम् ।
भावेष्वेषु समाश्रिते क्षितिसुते देवोत्सवध्वंसनं
दुर्वादं कलहं तथोत्सवविधौ देवक्रुधाभूदिति ॥ २०२ ॥

संहारोडुगते कुजेऽस्तनवमापत्यस्थितो वा यदि
क्षेत्राशादिषु वैरदोषवशतो दीपक्षतिं निर्दिशेत् ।
योगेऽस्मिन् शनिवर्गगो यदि कुजो मान्द्याश्रितो वा यदि
क्षेत्रे गोपुरदाहकृत्यमरिणानिष्टप्रदं निर्दिशेत् ॥ २०३ ॥

**अष्टमभावचिन्तनम्**

रन्ध्रत्रिकोणे शुभखेचरेन्द्रे सान्निध्यवृद्धिश्च निवेद्यसौख्यम् ।
पापान्विते तत्र विनाशमेवं मिश्रे च मिश्रं फलमाहुरार्याः ॥ २०४ ॥

मृतिभावगते भानावपक्वान्नमुदीरयेत् ।
अस्रुतं चातिपक्वं च चन्द्रे स्कन्नं च भूमिजे ॥ २०५ ॥

मन्देऽनुष्णं दूरसश्च राहौ वीक्षाविषान्वितम् ।
गुळिके केशयुक्तं वा प्राणिना वा समायुतम् ॥ २०६ ॥

**नवमभावचिन्तनम्**

पापान्विते नवमभे बहवो यदि स्युः क्षेत्राधिपास्तदुडुजन्मन एषु दोषः ।
आचार्यदेवलकतत्परिचारकादि दोषानुभूतिकथनं च तदुक्तरीत्या ॥ २०७ ॥

धर्माद् धर्मपतौ रिपुव्ययगते जीवे च दुःस्थानगे
वक्तव्यो भजनादिकर्मनियमत्यागोऽथवाऽश्रद्धया ।

देवस्यापि च कोपतः प्रतिदिनं राजारिचोरानला-
द्भीतिः कोशसुतक्षयौ गृहपशुध्वंसोऽपमृत्युस्तथा ॥ २०८ ॥

केन्द्रत्रिकोणसहितो यदि भाग्यनाथो जीवाच्छवीक्षितयुतः शुभराशिगो वा ।
लग्नाधिपेन सहितोऽप्यतिमित्रगो वा क्षेत्राधिपः शुभफलैरभिवृद्धिमेति ॥ २०९ ॥

**दशमभावचिन्तनम्**

दुःस्थाननाथे यदि कर्मसंस्थे कर्माधिपे वा यदि दुष्टखेटे ।
पूजादिवैकल्यमथोत्सवादिहानिं च तत्साधननाशनं वा ॥ २१० ॥

**एकादशभावचिन्तनम्**

लाभराश्यधिपे दुःस्थे मान्दिदृग्योगसंयुते ।
सुकृतस्य विनाशेन लाभनाशमृणं वदेत् ॥ २११ ॥

**द्वादशभावचिन्तनम्**

व्ययाधिपे चोभयराशिसंस्थे तदंशके वा यदि पापयुक्ते ।
युक्ते ग्रहाणं द्वितयेन रिःफे ह्याचार्ययुग्मं प्रवदेच्च विद्वान् ॥ २१२ ॥

व्यायाधिपे सौम्यखगे बलाढ्ये स्वर्क्षेतिमित्रे शुभयोगदृष्टे ।
तस्मात्त्रिकोणे शुभखेटयुक्ते ह्याचार्यकस्यापि विशेषवृद्धिः ॥ २१३ ॥

लग्नाद्व्यये पापयुतेक्षिते वा पापान्तरस्थे व्ययभेऽरिभे वा ।
आचार्यके दोषमुशन्ति तस्मान्मन्दारदृष्टे सति निश्चयेन ॥ २१४ ॥

लग्नांशकेन सान्निध्यं बिम्बं चन्द्रांशकेन तु ।
अशुद्धिर्मन्दजांशेन देवप्रश्ने विधीयताम् ॥ २१५ ॥

**प्रेतबाधाचिन्तनम्**

आचार्यदेवलकदासजनादिभावनाथेन वीक्षितयुतो गुळिको यदि स्यात् ।
भावस्थितीक्षणवशाच्च भवन्ति तेषां प्रेताः पुरातनभवाश्चरभेऽन्यथान्यः ॥ २१६ ॥

**तन्त्रिशापलक्षणम्**

आचार्यभावे षष्ठेशे षष्ठे ह्याचार्यभावपे ।
आचार्यशापं जानीयादन्येषामप्ययं नयः ॥ २१७ ॥

**क्षेत्रवृद्धिकर्माणि**

देवीनिषेवागणनाथहोमभाग्यैकमत्यप्रदसूक्तजापाः ।
आपन्निवृत्त्यै धनधान्यवृद्ध्यै गव्याभिषेकादिकमत्र शुद्ध्यै ॥ २१८ ॥

अष्टद्रव्ययुतैः केरैर्यद्वा त्रिमधुराप्लुतैः ।
सर्वविघ्नहरं होमं कुर्याद्देव्यर्चनामपि ॥ २१९ ॥

चतुर्दशैकपञ्चाशदेकोत्तरशतं तु वा ।
भाग्यसूक्तं महाभाग्यसूक्तं वा युगपत्पृथक् ॥ २२० ॥

संवादसूक्तं सप्ताष्टविंशद्वा चैकविंशकम् ।
तत्तद्दैवतसूक्तानि वेदांश्च विधिवज्जपेत् ॥ २२१ ॥
भारतादीतिहासानि तत्तद्देवोचितानि च ।
भक्तिविश्वासपूर्वं तु पठेद्देवस्य सन्निधौ ॥ २२२ ॥

**॥ इति प्रश्नानुक्रमे चतुर्दशोऽध्यायः ॥**

* * *

# ॥ अथ पञ्चदशोऽध्यायः ॥

## द्रेक्काणस्वरूपम्

**मेषः**

*प्रथमः* कट्यां सितवस्त्रवेष्टितः कृष्णः शक्त इवाभिरक्षितुम् ।
रौद्रः परशुं समुद्यतं धत्ते रक्तविलोचनः पुमान् ॥ १ ॥

*द्वितीयः* रक्ताम्बरा भूषणभक्ष्यचित्ता कुम्भाकृतिर्वाजिमुखी तृषार्ता ।
एकेन पादेन च मेषमध्ये द्रेष्काणरूपं यवनोपदिष्टम् ॥ २ ॥

*तृतीयः* क्रूरः कलाज्ञः कपिलः क्रियार्थी भग्नव्रतोऽभ्युद्यतदण्डहस्तः ।
रक्तानि वस्त्राणि बिभर्ति चण्डो मेषे तृतीयः कथितस्त्रिभागः ॥ ३ ॥

**वृषभः**

*प्रथमः* कुञ्चितलूनकचा घटदेहा दग्धपटा तृषिताशनचित्ता।
आभरणान्यभिवाञ्छति नारी रूपमिदं वृषभे प्रथमस्य ॥ ४ ॥

*द्वितीयः* क्षेत्रधान्यगृहधेनुकलाज्ञो लाङ्गले सशकटे कुशलश्च।
स्कन्धमुद्वहति गोपतितुल्यं क्षुत्परोऽजवदनो मलवासाः ॥ ५ ॥

*तृतीयः* द्विपसमकायः पाण्डुरदंष्ट्रः शरभसमाङ्घ्रिः पिङ्गलमूर्तिः।
अविमृगलोभव्याकुलचित्तो वृषभवनस्य प्रान्तगतोऽयम् ॥ ६ ॥

**मिथुनम्**

*प्रथमः* सूच्याश्रयं समभिवाञ्छति कर्म नारी रूपान्विताभरणकार्यकृतादरा च।
हीनप्रजोच्छ्रितभुजर्तुमती त्रिभागमाद्यं तृतीयभवनस्य वदन्ति तज्ज्ञाः ॥ ७ ॥

*द्वितीयः* उद्यानसंस्थः कवची धनुष्माञ्छूरोऽस्त्रधारी गरुडाननश्च।
क्रीडात्मजालङ्करणार्थचिन्तां करोति मध्ये मिथुनस्य राशेः ॥ ८ ॥

*तृतीयः* भूषितो वरुणवद्बहुरत्नो बद्धतूणकवचः सधनुष्कः।
नृत्यवादितकलासु च विद्वान् काव्यकृन्मिथुनराश्यवसाने ॥ ९ ॥

**कर्कटकः**

*प्रथमः* पत्रमूलफलभृद्द्विपकायः कानने मलयगः शरभाङ्घ्रिः।
क्रोडतुल्यवदनो हयकण्ठः कर्कटे प्रथमरूपमुशन्ति ॥ १० ॥

*द्वितीयः* पद्मार्चिता मूर्धनि भोगियुक्ता स्त्री कर्कशारण्यगता विरौति।
शाखां पलाशस्य समाश्रिता च मध्ये स्थिता कर्कटकस्य राशेः ॥ ११ ॥

*तृतीयः* भार्याभरणार्थमर्णवं नौस्थो गच्छति सर्पवेष्टितः।
हेमैश्च युतो विभूषणैश्चिपिटास्योऽन्त्यगतश्च कर्कटे ॥ १२ ॥

**सिंहः**

*प्रथमः* शाल्मलेरुपरि गृध्रजम्बुकौ श्वा नरश्च मलिनाम्बरान्वितः।
रौति मातृपितृविप्रयोजितः सिंहरूपमिदमाद्यमुच्यते ॥ १३ ॥

*द्वितीयः* हयाकृतिः पाण्डुरमाल्यशेखरो बिभर्ति कृष्णाजिनकम्बलं नरः।
दुरासदः सिंह इवात्तकार्मुको नताग्रनासो मृगराजमध्यमः ॥ १४ ॥

*तृतीयः* ऋक्षाननो वानरतुल्यचेष्टो बिभर्ति दण्डं फलमामिषं च।
कूर्ची मनुष्यः कुटिलैश्च केशैर्मृगेश्वरस्यान्त्यगतस्त्रिभागः ॥ १५ ॥

**कन्या**

*प्रथमः* पुष्पप्रपूर्णेन घटेन कन्या मलप्रदिग्धाम्बरसंवृताङ्गी।
वस्त्रार्थसंयोगमभीष्टमाना गुरोः कुलं वाञ्छति कन्यकाद्यः ॥ १६ ॥

*द्वितीयः* पुरुषः प्रगृहीतलेखनिः श्यामो वस्त्रशिरा व्ययायकृत्।
विपुलं च बिभर्ति कार्मुकं रोमव्याप्ततनुश्च मध्यमः ॥ १७ ॥

*तृतीयः* गौरी सुधौताग्रदुकूलगुप्ता समुच्छ्रिता कुम्भकटच्छुहस्ता।
देवालयं स्त्री प्रयता प्रवृत्ता वदन्ति कन्यान्तगतत्रिभागः ॥ १८ ॥

**तुला**

*प्रथमः* वीथ्यन्तरापणगतः पुरुषस्तुलावानुन्मानमानकुशलः प्रतिमानहस्तः।
भाण्डं विचिन्तयति तस्य च मूल्यमेतद्रूपं वदन्ति यवनाः प्रथमं तुलायाः ॥ १९ ॥

*द्वितीयः* कलशं परिगृह्य विनिष्पतितुं समभीप्सति गृध्रमुखः पुरुषः।
क्षुधितस्तृषितश्च कलत्रसुतान्मनसैति तुलाधरमध्यगतः ॥ २० ॥

*तृतीयः* विभीषयँस्तिष्ठति रत्नचित्रितो वने मृगान् काञ्चनतूणवर्मभृत्।
फलामिषं वानररूपभृन्नरस्तुलावसाने यवनैरुदाहृतः ॥ २१ ॥

**वृश्चिकः**

*प्रथमः* वस्त्रैर्विहीनाभरणैश्च नारी महासमुद्रात् समुपैति कूलम्।
स्थानच्युता सर्पनिबद्धपादा मनोरमा वृश्चिकराशिपूर्वः ॥ २२ ॥

*द्वितीयः* स्थानसुखान्यभिवाञ्छति नारी भर्तृकृते भुजगावृतदेहा।
कच्छपकुम्भसमानशरीरा वृश्चिकमध्यमरूपमुशन्ति ॥ २३ ॥

*तृतियः* पृथुलचिपिटकूर्मतुल्यवक्त्रः श्वमृगवराहशृगालभीषकारी।
अवति च मलयाकरप्रदेशं मृगपतिरन्त्यगतस्य वृश्चिकस्य ॥ २४ ॥

**धनुः**

*प्रथमः* मनुष्यवक्त्रोऽश्वसमानकायो धनुर्विगृह्यायतमाश्रमस्थः।
क्रतूपयोज्यानि तपस्विनश्च ररक्ष आद्यो धनुषस्त्रिभागः ॥ २५ ॥

*द्वितीयः* मनोरमा चम्पकहेमवर्णा भद्रासने तिष्ठति मध्यरूपा।
समद्ररत्नानि विघट्टयन्ती मध्यत्रिभागो धनुषः प्रदिष्टः ॥ २६ ॥

*तृतीयः* कूर्ची नरो हाटकचम्पकाभो वरासने दण्डधरो निषण्णः।
कौशेयकाव्युद्वहतेऽजिनं च तृतीयरूपं नवमस्य राशेः ॥ २७ ॥

**मकरः**

*प्रथमः* रोमचितो मकरोपमदंष्ट्रः सूकरकायसमानशरीरः।
योक्त्रकजालकबन्धनधारी रौद्रमुखो मकरप्रथमस्तु ॥ २८ ॥

*द्वितीयः* कलास्वभिज्ञाब्जदलायताक्षी श्यामा विचित्राणि च मार्गमाणा।
विभूषणालङ्कृतलोहकर्णा योषा प्रदिष्टा मकरस्य मध्ये ॥ २९ ॥

*तृतीयः* किन्नरोपमतनुः सकम्बलस्तूणचापकवचैः समन्वितः।
कुम्भमुद्वहति रत्नचित्रितं स्कन्धगं मकरराशिपश्चिमः ॥ ३० ॥

**कुम्भः**

*प्रथमः* स्नेहमद्यजलभोजनागमव्याकुलाकृतमनाः सकम्बलः।
कोशकारवसनोऽजिनान्वितो गृध्रतुल्यवदनो घटादिगः ॥ ३१ ॥

*द्वितीयः* दग्धे शकटे सशाल्मले लोहान्याहरतेऽङ्गना वने।
मलिनेन पटेन संवृता भाण्डैर्मूर्ध्नि गतैश्च मध्यमः ॥ ३२ ॥

*तृतीयः* श्यामः सरोमश्रवणः किरीटी त्वक्पत्रनिर्यासफलैबिभर्ति।
भाण्डानि लोहव्यतिमिश्रितानि सञ्चारयत्यन्तगतो घटस्य ॥ ३३ ॥

**मीनः**

*प्रथमः* स्रुग्भाण्डमुक्तामणिशङ्खमिश्रैर्व्याक्षिप्तहस्तः सविभूषणश्च।
भार्याविभूषार्थमपां निधानं नावा प्लवत्यादिगतो झषस्य ॥ ३४ ॥

*द्वितीयः*
अत्युच्छ्रितध्वजपताकमुपैति पोतं कूलं प्रयाति जलधेः परिवारयुक्ता।
वर्णेन चम्पकमुखा प्रमदा त्रिभागो मीनस्य चैष कथितो मुनिभिर्द्वितीयः ॥ ३५ ॥

*तृतीयः* श्वभ्रान्तिके सर्पनिवेष्टिताङ्गो वस्त्रैर्विहीनः पुरुषस्त्वटव्याम्।
चौरानलव्याकुलितान्तरात्मा विक्रोशतेऽन्त्योपगतो झषस्य ॥ ३६ ॥

**द्रेक्काणानुक्रमः**

कट्यां रक्ताम्बरा क्रूरः कुश्चित क्षेत्रधा द्विप ।
सूच्योद्या भूषितः पत्र पद्मा भार्याभ शल्मलेः ॥ ३७ ॥
हयर्क्षानन पुष्पप्र पुरुषः प्रगृहीत गौ ।
वीथी कल विभी वस्त्रैर्विही स्थानसुखा पृथुः ॥ ३८ ॥
मनुर्मनोर कूर्ची रो कला कि स्नेहमद्यज ।
दग्धे श्याम स्रुगत्युच्छ्रि श्वभ्रेत्यादिभिरीरिता ॥ ३९ ॥
मेषाद्याद्या झषान्त्यान्ता द्रेष्काणाः स्वस्वरूपतः ।
वस्त्रास्त्रभूषणाकारान् वदेच्चोरस्य तत्समान् ॥ ४० ॥

**द्रेक्काणचिन्तनम्**

द्रेक्काणाकारचेष्टागुणसदृशफलं योजयेद्बुद्धिहेतो-
र्द्रेक्काणे सौम्यरूपे कुसुमफलयुते रत्नभाण्डान्विते च ।
सौम्यैर्दृष्टे जयः स्यात् प्रहरणसदृशे पापदृष्टे च भङ्गः
सम्मोहो वाऽथ बन्धः सभुजगनिगडे पापयुक्ते पिपासुः ॥ ४१ ॥

**॥ इति प्रश्नानुक्रमे पञ्चदशोऽध्यायः ॥**

## श्रीकृष्णार्पणम्

कृष्ण त्वदीय चरणाब्जयुगे महत्या
भक्त्या समर्पयितुमेव बहुश्रमेण ।
नाना प्रबन्धनिचये निहितप्रसूनैः
प्रोतेयमेव खलु कोमलवन्यमाला ।।

नानाग्रन्थान् समाहृत्य विचार्य च पदे पदे ।
विद्वत्प्रयोजनायैव क्रम एष निरूपितः ।।

श्लोको वा श्लोकपादो वा मुधा नैवात्र योजितः ।
एते मुख्या हि चिन्तायां सर्वे पीयूषबिन्दवः ।।

श्रीमत्पार्थिववत्सरे कुजदिने ज्येष्ठे सिते निर्मिता
नानाग्रन्थसमात्तसाधुविषया लोकोपकारेच्छया ।
प्रश्नानुक्रमनामिका कृतिरियं पुण्या नदीवाम्बुधौ
शिष्टानुग्रहदुष्टनिग्रहरते श्रीकृष्णपादेऽर्पिता ।।

स्वयं सर्वगुणैः पूर्णः नानाकल्पविभूषितः ।
वन्यमालामिमां धृत्वा पद्मनाभो विराजताम् ।।

समतीतानि यो वेद वर्तमानानि सर्वशः ।
भविष्याणि च सर्वात्मा प्रीयतां मन्थपाशभृत् ।।

– सुब्रह्मण्य अवधानी
– वेङ्कटरमण अवधानी

# श्लोकानुक्रमः

## फ

ल

## व

* * * * *

ह

|| ಶ್ರೀ ಗುರುಭ್ಯೋ ನಮಃ ||



ಶ್ರೀಮತಿ ಮತ್ತು ಶ್ರೀ ಬೈಲೂರು ಅನಂತಪದ್ಮನಾಭ ತಂತ್ರಿಗಳು

ಇಂದಿನ ಸಮಾಜದಲ್ಲಿ ಸರಿಯಾಗಿ ಶಾಸ್ತ್ರಾಧ್ಯಯನ ಮಾಡುವವರ ಸಂಖ್ಯೆ ದಿನದಿಂದ ದಿನಕ್ಕೆ ಕ್ಷೀಣಿಸುತ್ತಿದೆ. ಅದರ ಬದಲು, ಶಾಸ್ತ್ರಾಧ್ಯಯನ - ಮಾಡದೆ ಜ್ಯೋತಿಷ ವೃತ್ತಿ ಹೊಂದುವವರ ಸಂಖ್ಯೆ ನಿರಂತರ ಹೆಚ್ಚುತ್ತಿದೆ. ಇದರಿಂದ ಶಾಸ್ತ್ರವಿಷಯದಲ್ಲಿ ಅಜ್ಞರಾಗಿದ್ದರೂ ಜನರಿಗೆ ಸಮಗ್ರವಾಗಿ ಜ್ಯೋತಿಶ್ಶಾಸ್ತ್ರದ ಬಗ್ಗೆ ತಪ್ಪು ಕಲ್ಪನೆಗಳು ಮೂಡುತ್ತಿವೆ. ಸರಿಯಾಗಿ ಅಧ್ಯಯನ ಮಾಡದೆ ಫಲ ಹೇಳುವವನ ಮಾತು ಸುಳ್ಳಾದರೆ ಜನರು ಶಾಸ್ತ್ರವನ್ನೇ ಸುಳ್ಳೆಂದು ಜರೆಯುತ್ತಾರೆ. ಇದೊಂದು ಹೊಟ್ಟೆಪಾಡಿನ ವ್ಯವಸ್ಥೆ ಎಂದು ಮೂದಲಿಸುತ್ತಾರೆ. ಇದು ಜ್ಯೋತಿಶ್ಶಾಸ್ತ್ರದ ಆರೋಗ್ಯಕರ ಬೆಳವಣಿಗೆ ಎನಿಸಲಾರದು. ಸರಿಯಾದ ಅಧ್ಯಯನ- ಅಧ್ಯಾಪನವಿಲ್ಲದಿದ್ದರೆ ಶಾಸ್ತ್ರದ ಪ್ರಾಚೀನ ಸಂಪ್ರದಾಯಗಳು ನಾಶ ಹೊಂದುವುದು ಆಶ್ಚರ್ಯಕರ ಸಂಗತಿಯೇನಲ್ಲ. ತ್ರಿಕಾಲಜ್ಞಾನಿಗಳಾದ ಋಷಿಮುನಿಗಳು ಯಾವ ಉದಾತ್ತಧ್ಯೇಯದಿಂದ ಈ - ಶಾಸ್ತ್ರವನ್ನು ಮುನ್ನಡೆಸಿದ್ದರೋ ಅದೀಗ ವಿಕೃತರೂಪ ಪಡೆಯುತ್ತಿದೆ. ಆದ್ದರಿಂದ ಇಂದಿನ ಯುವಪೀಳಿಗೆ ಶಾಸ್ತ್ರಾಧ್ಯಯನಕ್ಕೆ ಹೆಚ್ಚಿನ ಮಹತ್ವಕೊಟ್ಟು ಋಷಿಮುನಿಗಳ ಕಲ್ಪನೆಯ ಜ್ಯೋತಿಶ್ಶಾಸ್ತ್ರವನ್ನು ಜನತೆಯ ಮುಂದಿಡಬೇಕಾದದ್ದು ಅತ್ಯವಶ್ಯವಾಗಿದೆ.

— ಶ್ರೀ ಬೈಲೂರು ಅನಂತಪದ್ಮನಾಭ ತಂತ್ರಿಗಳು